श्रीयुक्त राय धनपति सिंह वाहादुरका आगम संग्रह भाग १

# श्री आचारांग जी सूत्र प्रथमांग।

गणधर श्री सुधर्म्मास्वामीकृत मूलसूत्र तदुपरी श्रीशीलङ्काचार्य्यकृत टीका तदुपरी

दीपिका श्रीजिनहंस सूरिकृत तदुपरी पार्श्वचन्द्र सूरिकृत वालावोध।

कलकत्ता।

नूतन संस्कृत यन्त्र से छपा गया।

रेजिष्टरि कराया गया।

संवत १९३६।

मूल्य ४५॥) साडे पयतालिस रुपैया।

जैनि स्वधर्म्मीके वास्ते अर्द्धमूल्य अर्थात् २२।।।) वाईस रूपैया वार आना

इय पुस्तक अजीमगञ्ज श्रीयुक्त राय धनपति सिंह वहादुरके कोठिसे मिलेगा।

# आचारांगसूत्र।

अर्हं जिणवयणकप्परुक्खो अणेगसुत्तत्थसालविच्छिण्णो तवनियमकुसुमगुच्छो सुग्गइफलबंधणोजयइ १ जीवोछक्कायपरूवणायतेसिंवहेणबंधोय विरईइअहिगारो सत्थपरिण्णाइणायव्वो २ अंगाणयकिंसारो आयारोतस्सकिंहवइसारं अणुओगत्थोसारं तस्सवियपरूवणासारं ३ सारंपरूवणाएचरणं तस्सवियहोइणिव्वाणं णिव्वाणस्सयसारं अव्वाबाहं जिणाविंति ४ सुयंमेआउ

भाषा

। श्रीगुरुभ्यो नमः ।। प्रणम्य श्रीजीनाधीशं श्रीगुरुणामनुग्रहात् । लिख्यते सुखबोधार्थमाचाराङ्गार्थवार्त्तिकं । १ । सुतरांशब्दशास्त्रेण येषां बुद्धिरसंस्कृता। व्यामोहो जायते तेषां दुर्गमे वृत्तिविस्तरे । २ । ततो वृत्तेः समुधृत्यसुलभो लोकभाषया । धर्मलिप्सूपकारायादिमागार्थः प्रतन्यते ।३। श्रीजिनशासने द्वादशांगीसूत्रतेवार अंगमांहिप्रथमअंगश्रीआचारांग जिणिकारणिमोक्षनाअंगज्ञानाचारादिकते इहांप्ररूपिये तिणिए श्रीआचारांगभणिये । तेहनावेश्रुतस्कंधतिहां पहिलेश्रुतस्कंधे नवअध्ययन तेकेहाशस्त्रपरिज्ञाध्ययन१ लोकविजय २ शीतोष्णीय ३ सम्यक्त्व ४ लोकसार ५ धूत ६ महापरिज्ञा ७ विमोक्ष ८ उपधानश्रुत ९ एनवअध्ययनरूपआचारकहिये बीजेश्रुतस्कंधेजेतला अध्ययनतेआचाराग्रएहवेनामेबोलाइ तिहांप्रथमश्रुतस्कंधेपहिलेअध्ययनेजीवोक० जीवनीअस्तिताभावछकायनीप्ररूपणा । तेहनेवधेकर्मनोबंधतथाविरतिनो अधिकारएतला अर्थनोसंबंधशस्त्रपरिज्ञायनेजाणिवो बीजेअध्ययनेलोकनोविजयअष्टकर्मजिमबंधाइं तेपरितथाएजिमछांड़िवाएहवोअर्थछे । त्रीजेअध्ययने कषायजीतीअनुकूलप्रतिकूल उपसर्गसहिवाएभावछे । चउथे अध्ययनेसम्यक्तनीदृढताकरिवीएअर्थछे। पांचमेअध्ययनेलोकनो साररत्नत्रयतेहनेविषे यत्नकरिवो एहवोभावछे । छट्ठेअध्ययनेनिस्संगतासहितचारित्रियें अप्रतिबद्धिइंथाइवो एहवुं भावछे सातमेअध्ययने कदाचितसंयमप्रतिपालतासाधुनेपरीसहउपजेतेसम्यक्प्रकारिसहिवा एहवोभावछे । आठमेअध्ययनेसर्वगुणसंयुक्तचारित्रिये अंतक्रियासम्यक्प्रकारिकरिवीएहवोभावछे नवमेअध्ययने जेआठअध्ययनविषेजे अर्थभाष्योतेश्रीवर्द्धमानस्वामिसम्यक्आचर्योतेसमस्तसाधुने संयमनाउत्साहनेअर्थेभाष्योछे। एतलानवअध्ययनविषे अर्थाधिकारजाणिवाहिवबीजेश्रुतस्कंधेचूलिका ५ तिहांपंचमीचुलिकानिशीथ तेएहमाहिंनालेवी । अनेरीचुलिका ४ तिहांपहिलीचुलिकाइअध्ययन ७ बीजीचूलिकाइंअध्ययन ७ त्रीजीअने चउथीये एकएकअध्ययन एवं बीजेस्कंधेअध्ययन १६ एवंआचारागेअध्ययन २५ अनेउद्देशा ८५ एतलाछे हिवेश्रीआचारांग सर्वशास्त्रनोंसारजाणिवोजेहकारणेअंगसर्वनो सारआचारबोल्यो तेहनी प्ररूपणाश्रीआचारागेछे तेहकारणथकी श्रीआचारांगनोभावटव्वामात्र लोकनाउपकारभणीलिखिदेछे। तेहनोआदिसूत्रसुयं व्याख्या भगवंतश्रीसुधर्मस्वामिजंबूप्रतिइमकहे हे चिरंजीवीएहवोशिष्यनो आमंत्रणकरीवोल्यामेएहवोसांभल्यो तेणेंभगवंते श्रीमहावीरदेवे इमकह्यो । तेकिसो । इणिसंसारमाहिंएकणिज्ञानावरणिइं आवर्या प्राणियानेसंज्ञाकहतासम्यग्ज्ञाननहुवे । तेकेहोंसम्यग्ज्ञाननहुवेतेकहेछे । तंजहापुर० मणुयातिरियाकायातहग्गवीयाचउक्कगाचउरो

दीपिका टीका

॥ अर्हं ॥ शासनाधीश्वरोजीयाद्वर्द्धमानोजिनेश्वरः । भवन्ति सुखिनोभव्या यदीयवाचनास्ततैः ।।१। शीलांकाचार्यरचितावृत्तिरस्तिसविस्तरा । श्रीआचारांगसूत्रस्यदुर्विगाहतरंततः ।२। अनुग्रहार्थं सभ्यानांव्याख्यानॄणांसुखावहा। श्रीजिनहंससूरींद्रैःक्रियतेस्म

प्रदीपिका।३। इहद्वादशानामंगानां प्रथमांगं श्रीआचारांगं। यतोज्ञानाचारादीनां मोक्षांगभूतानामिहप्ररूपणादाचारांगंअतद्धि द्वौश्रुतस्कंधौ तत्रचप्रथमे श्रुतस्कन्धे नवाध्ययनानि तानि चामूनि सत्थपरिन्ना१ लोगविजयो२सीओसणिज्ज३ सम्मत्तं४ तहलोग सारनामं५ धुवं६ तहमहापरिन्नाय७।१। अट्ठमएयविमोक्खो८ उवहाणसुयं९चनवमगंभणियंइच्चे सोआयारोआयारग्गाणिसेसाणि२ सप्टाकेवलंइत्थेप नवाध्ययनरूपआचार: द्वितीयश्रुतस्कन्धाध्ययनानि तुआचाराग्राणिशेषाणीति अथ नवाध्ययनानामर्थाधिकारो यथाजियसंजमोय १ लोगो जहबज्झइजहयतंपयहियव्वं २ सुहदुक्खतितिक्खाविय ३ सम्मत्तं ४ लोगसारोय ५ निस्संगयायछट्टे६ मोहसमुत्था परीसहोवसग्गा७ निव्वाणंअट्ठमए नवमेयजिणेणपयंतिः९। २ निर्युक्तिगाथाव्याख्या जियसंजमोत्तिजिवेषुसंयमोजीव संयमस्तेषु हिंसादिपरिहार: सचजीवास्तित्वपरिज्ञानेसति भवतिअतोजीवास्तित्वविरति प्रतिपादनमत्रार्थाधिकार: तत्रगस्त्रपरि ज्ञायामयमर्थाधिकारो यत: जीवोछक्कायपरूवणाय तेसिंवहेणबंधोत्तिविरइए अहिगारो सत्थपरिन्नायव्वो १। लोकविजये तुलोगोजहबज्झइजहयतंपजहियव्वंति। विजितभावलोकेन संयमस्थितेन लोको यथा बाध्यते। अष्टविधेन कर्मणा यथाच तत्प्रहातव्यं तथा ज्ञातव्यमित्ययमर्थाधिकार: ।२। तृतीयेत्वयंसंयमस्थितेन जितकषायेणानुकूलप्रतिकूलोपसर्गनिपाते सुखदु:ख तितिक्षाविधेयेति।३। चतुर्थेत्वयंप्राक्तनाध्ययनार्थसम्पन्नेन तापसादिकष्टतपसेविना अष्टगुणैश्वर्यमुद्वीक्ष्यापि दृढसम्यक्तेन भवितव्य मिति। ४। पंचमे त्वयंचतुरध्ययनार्थस्थितेनासारपरित्यागेनलोकसाररत्नत्रयोद्युक्तेन भाव्यमिति ५। षष्ठे त्वयंप्रागुक्तगुणयुक्तेन नि:सं गसायुक्तेनाप्रतिबद्धेनभवितव्यं ६। सप्तमे त्वयं संयमादिगुणयुक्तस्य कदाचिन्मोहसमुत्थापरीषहे उपसर्गावाप्रादुर्भवेयु: तेसम्यग्सो ढव्या:७। अष्टमे त्वयंनिर्याणमन्त क्रियासासर्वगुणयुक्तेनसम्यग्विधेयेति८ नवमाध्ययनेत्वयंअष्टाध्ययनेनप्रतिपादितोर्थ:। सम्यगेव वर्द्धमानस्वामिना विहितइति तत्प्रतिपादनंचाशेषसाधूनामुत्साहार्थं इति नवाध्ययनार्थाधिकार:। अथउद्देशाधिकार:। तत्रप्रथमे श्रुतस्कन्धे नवस्वध्ययनेषु क्रमेणसप्तषट्२ चत्वार:३ चत्वार४ षट्५ पंच६ अष्ट७ चत्वार: ८ सप्त९उद्देशाभवन्ति। द्वितीयेहिश्रुतस्कंधे पंचचुलिका। तासुपंचमीनिशीथाख्यासाइहनगृह्यतेभिन्नस्थानरूपत्वात्तस्या:। तदन्याचतस्त्र तासुचप्रथमद्वितीयेसप्तसप्ताध्ययना त्मिकेतृतीयेचतुर्थी च एकैकाध्ययनात्मिकेतत्रप्रथमचुलिकायांसप्ताध्ययनेषुक्रमेण उद्देशकसंख्यायथा। प्रथमाध्ययनेएकादशद्वितीये त्रय तृतीये त्रयशेषेषु चतुर्षु द्वौ द्वौ उद्देशकौ द्वितीयायां चूलिकायां सप्तैकसराणि अध्ययनानि तृतीयाचूलिकाएकाध्ययनात्मिका एवंचतुर्थ्यपिचुलिकाएकाध्ययनात्मिका एवंसर्वमीलने पंचाशीतिरुद्देशनकालाभवन्ति यत: समवायांगेनप्याच सेणंअंगट्टयाएपढमेअं गेदोसुयक्खंधापणवीसं अज्झयणापंचासीइं समुद्देसणकाला अट्ठारसयपयसहस्साइं पयग्गेणंपन्नत्ताइत्याद्यागमवचनात्कालिकश्रुतं आचारांगंयोगविनाकालग्रहणैर्विनातपसा च पठतिवाचयतिश्रावयति अकृततपस:पार्श्वेचय: शृणोतितस्य सूत्राज्ञाभंगदोष: आग माज्ञा भंगोहिमहते संसाराय आचारोमोक्षांगं यतोनिर्युक्तिकृदाह। अंगाणयकिंसारो आयारोतस्सकिंहवइसारो अणुओगत्थो सारोतस्सवियपरूवणासारो।१। सारोपरूवणाएचरणं तस्सवियहोइनिव्वाणं निव्वाणस्सउसारो अव्वाबाहंजिणाबिंति २। सांप्रतं आचारादिप्रदानस्यसुखप्रतिपत्तये दृष्टान्तोपन्यासेन विधिराख्यायते यथाकश्चिद्राजाऽभिनवनगरनिवेशेच्छयाभूखण्डानिविभज्यसम तयाप्रकृतिभ्योदत्तवांस्तथाकच वरापनयने सल्योद्धारेभूस्थिरीकरणे पक्केटकापीठप्रासादरचनेरत्नाद्युपादाने चोपदेशंदत्तवान् ताश्च प्रकृतयस्तदुपदेशद्वारेण तथैव कृत्वा यथाभिप्रेतानृसुखानुबभुंजिरे। अयमत्रार्थोपनय:राजस्थानीयेनसूरिणाप्रकृतिस्थानीयस्यशिष्यगणस्य भूखंडस्थानीय:संयमोमिथ्यात्वकचवराद्यपनीयसर्वोपधाशुद्धस्यारोपणीयस्तंच सामायिकारंयमंस्थिरीकृत्यपक्वेटकापीठतुल्यानिव्रतानि आरोपणीयानि तत:प्रासादकल्पोयमाचारोविधेय स्ततस्तत्राशेषशास्त्रादिरत्नान्यादत्ते निर्वाणभाग्भवति अथशस्त्रपरिज्ञाध्ययनस्य नामान्वयं निर्युक्तिकृदाह शस्त्रपरिज्ञेतिद्विपदंनामशस्त्रस्यनिक्षेपमाह दव्वंसत्थग्गिविसनेहं विलखारलोणमादीयंभावोउदुप्पउत्तो वायाकायाअविरतीय। १। शस्त्रस्यनिक्षेपोनामादिश्चतुर्द्धा तत्रनामस्थापनेसुगमे व्यतिरिक्तंद्रव्यशस्त्रं खड्गादिअग्निविषस्नेहाम्लक्षा

रलवणादिकं भावशस्त्रं तु दुःप्रयुक्तोभावो अन्तःकरणंवाक्कायाऽविरतिश्चेति जीवोपघातकारित्वादितिभावः परिज्ञापिचतुर्द्धा द्रव्यं जाण
णपच्चक्खाणेभविएसरीरउवगरणेभावपरिन्नजाणणा पच्चक्खाणंचभावेणं तत्रद्रव्यपरिज्ञाद्विधा ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाच ज्ञपरिज्ञा
आगमतोनोआगमभेदात्द्विधा आगमतोज्ञातानुपयुक्तः नोआगमतस्त्रिधा तत्रद्रव्यतिरक्ता द्रव्यज्ञानपरिज्ञायोयद्रव्यं जानीतेसचि
त्तादिसापरिच्छेद्यद्रव्यप्राधान्याद्द्रव्यपरिज्ञेति प्रत्याख्यानपरिज्ञाप्येवमेव तत्र व्यतिरक्तद्रव्यप्रत्याख्यानपरिज्ञादेह उपकरणपरि
ज्ञानं उपकरणंचजोहरणादिसाधकतमत्वात् भावपरिज्ञापिद्विधैव ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञा च तत्रागमतोज्ञाताउपयुक्तश्चनो
आगमतस्त्विदमेवाध्ययनंज्ञानक्रियारूपं नोशब्दस्यमिश्रवाचित्वात् प्रत्याख्यानभावपरिज्ञापितथैवआगमतःपूर्ववत् नोआगमतस्तुप्रा
णातिपातनिवृत्तिरूपामनोवाक्कायकृतकारितानुमतिभेदात्त्रिकालज्ञेयेति गतोनामनिष्पन्नोनिक्षेपः। सांप्रतंसूत्रानुगमेसूत्रंउच्चारणी
यंतच्चेदं सुयंमेआउसंतेणं भगवयाएवमक्खायं इहमेगेसिंनोसण्णाभवइ व्याख्या भगवान् सुधर्मस्वामीजंबूनाम्नइदमाचष्टे यथाश्रुतं
आकर्णितंअवगमितं अवधारितमिति अनेनस्वमनीषिकाव्युदासोमयेति साक्षान्नपुनःपारंपर्येण आउसंतेणंतिहे आयुष्मन्चिरंजी
विन् सर्वगुणेष्वायुष्कस्यैवप्राधान्यात् तदिवाआम्रशताभगवत्पादारविन्दे इत्यनेनविनयआविदितोभवति अथवा आवसतावातदन्ति
केइत्यनेनगुरुकुलवासःकर्त्तव्यः इत्यावेदितंभवति भगवतासमग्रैश्वर्यादिगुणवता श्रीवर्द्धमानस्वामिनाआख्यातं कथितं इहेतिशस्त्रप
रिज्ञाध्ययने अथवाइहेतिसंसारेएकेषांज्ञानावरणीयावृतानांप्राणिनांनोसंज्ञाभवति संज्ञानंसंज्ञास्मृतिरवबोधःसानोपजायतेआहा
रसंज्ञादीनांबहुत्वेपि इहज्ञानसंज्ञयाधिकारः यतः सैवनिषिद्धाइहैकेषांनोसंज्ञाज्ञानं अवबोधोभवतीति प्रतिषिद्धसंज्ञाविशेषावगमा

---

शीलंगाचार्य्यकृतटीका

ॐ नमः सर्वज्ञाय। जयतिसमस्तवस्तुपर्यायविचारापास्ततीर्थिकं। विहितैकैकतीर्थनयवादसमूहवशात्प्रतिष्ठितं। बहुविधभंगि
सिद्धसिद्धान्तविधूनितमलमलीमसंतीर्थमनादिनिधनगतमनुपममादिनतंजिनेश्वरैः ।१। आचारशास्त्रंसुविनिश्चितंयथाजगादवीरो
जगतेहिताययः। तथैवकिञ्चिद्गदतः सएवमेपुनातुधीमान्विनयार्पितागिरः २ शस्त्रपरिज्ञाविवरणमतिबहुगहनंचगन्धहस्तिकृतं।
तस्मात् सुखबोधार्थंगृह्णाम्यहमञ्जसासारं ३इहहिरागद्वेषमोहाद्यभिभूतेनसर्वेणापिसंसारिजन्तुनाशारीरमानसानेकदुःखोपनिपात
पीडितेनतदपनयनाय हेयोपादेयपदार्थपरिज्ञानेयत्नोविधेय सचनविशिष्टविवेकमृतेविशिष्टविवेकश्चनप्राप्ता शेषातिशयकलापाप्तोपदे
शमंतरेणाप्तश्चरागद्वेषमोहादीनांदोषाणामात्यन्तिकप्रक्षयात्। सचार्हन्नेवातः प्रारभ्यतेऽर्हद्वचनानुयोगः सचचतुर्द्धातद्यथा। धर्म
कथानुयोगोगणितानुयोगोद्रव्यानुयोगश्चरणकरणानुयोगश्चेतितत्रधर्मकथानुयोगउत्तराध्ययनादिकः गणितानुयोगःसूर्यप्रज्ञप्त्यादि
कःद्रव्यानुयोगपूर्वाणि सम्मत्यादिकश्चचरणकरणानुयोगआचारादिकः सचप्रधानतमःशेषाणांतदर्थत्वात्तदुक्तंचरण पडिवत्तिहेउंजे
णियरेतिणिअणुओगत्ति तथाचरणपडिवत्तिहे उधम्मकहाकालदिक्खमादीयादविए दंसणसोहीदंसणसुद्धस्सचरणंतु गणधरैर
प्यतएवतस्यैवादौ प्रणयनमकारितस्तत्प्रतिपादकस्याचारांगस्यानुयोगः समारभ्यतेसचपरमपदप्राप्ति हेतुत्वात्सविघ्नस्तदुक्तं श्रेयांसिब
हुविघ्नानिभवन्तिमह तामपिअश्रेयसिप्रवृत्तानां क्वापियान्तिविनायकातस्मादशेष प्रत्यूहोपशमनायमङ्गलमभिधेयंतच्चादिमध्यावसान
भेदात्त्रिधातत्रादिमङ्गलंसुयंमेआउ संतेणंभगवयाएवमक्खायमित्यादि अत्रचभगवद्वचनानुवादोमङ्गलं अथवाश्रुतमितिश्रुतज्ञानंतच्च
नन्द्यन्तःपातित्वान्मङ्गलमित्ये तच्चाविघ्नेनाभिलषित शास्त्रार्थपारगमनकारणंमध्य मङ्गलंलोकसाराध्ययनपञ्चमोद्देशक सूत्रंसेजहाके
विहरएपडिपुन्नेचिट्ठइसमंसिभोम्मे उवसन्तरएसारक्खमाणेत्यादिअत्रचह्रदगुणैराचार्य्यगुणोत्कीर्त्तनमाचार्यश्चपञ्चनमस्कारान्तः
पातित्वान्मङ्गलमित्येतच्चाभिलषित शास्त्रार्थस्थिरीकरणार्थंअवसानमङ्गलंनवमाध्ययनेवसानसूत्रं अभिनिव्वुडेअमाई आवकहाएभ
गवंसमियासी। अत्राभिनिर्वृतग्रहणंसंसारमहातरुकंदोच्छेदविप्रतिपत्त्याध्यान कारित्वान्मङ्गलमित्येतच्चशिष्यप्रशिष्यसन्तानाव्यव
च्छेदार्थमित्यध्ययनगतसूत्रमङ्गलत्वप्रतिपादनेनैवाध्ययनानामपिमङ्गलत्वमुक्तमेवेतिनप्रतन्यते सर्वमेववाशास्त्रंमङ्गलंज्ञानरूपत्वतृ

नस्यचनिर्जरार्थत्वात्निर्जरार्थत्वेनचतस्याविप्रतिपत्तिर्यदुक्तं । जंअन्नाणीकम्मं खवेइबहुयाहिंवासकोडीहिंतन्नाणी तिहिंगुत्तोखवेइउ
सासमित्तेणमङ्गलञ्चनिरुक्तंचमांगालयत्यपनयतिभवादितिमङ्गलं । माभूद्गलोविघ्नोगालोवानाशःशास्त्रस्येतिमंगलमित्यादिविशेषत्वाक्षेप
परिहारादिकमन्यतोवसेयमिति । सांप्रतमाचारानुयोगःप्रारभ्यतेआचारस्यानुयोगोर्थकथनमाचारानुयोगःसूत्रादनुपश्चादर्थस्ययोगो
नुयोगः सूत्राध्ययनात्पश्चादर्थकथनमितिभावना । अणोर्वालघीयसः सूत्रस्यमहतार्थेनयोगोनुयोगः सचामीभिर्द्वारैरनुगन्तव्यस्तद्यथा
निक्खेवेगट्ठनिरुत्तिविहिपवित्तीयकेणवाकस्स तद्दारभेयलक्खणतदरिहपरिसाएसुत्तत्थो तत्र निक्षेपेणानामादि । तत्रनामस्थापने
क्षुण्णे द्रव्यानुयोगोद्वेधा । आगमतोनोआगमतश्चतत्रागमतोज्ञातातत्रचानुपयुक्तोनो आगमतोज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोनेकधा
द्रव्ये णखेटिकादिनाद्रव्यस्यालपरमाण्वादेर्द्रव्ये निषद्यादौक्षेत्रानुयोगःक्षेत्रेणक्षेत्रस्यक्षेत्रेवानुयोगःक्षेत्रानुयोगएवंकालेनकालस्यकाले
वानुयोगःकालानुयोगःवचनानुयोगएकवचनादिनाभावानुयोगोद्वेधाआगमतोनोआगमतश्चतत्रागमतोज्ञातोपयुक्तोनोआगमतस्त्वौ
पशमिकादिभावैरेषांचानुयोगोर्थकथनंभावानुयोगःशेषमावश्यकानुसारेणज्ञेयंकेवलमिहानुयोगस्यप्रस्तुतत्वात्तस्यचाचार्याधीनत्वात्
केनेतिद्वारंविव्रियते तत्रोपक्रमादीनिचद्वाराणिप्रचुरतराणि प्रचुरतरोपयोगित्वात्प्रदर्श्यन्ते तत्रकेनेतिकथंभूतेनयथाभूतेनचसूरिणा
व्याख्याकर्त्तव्यातथाप्रदर्श्यते देसकुलजाइरूवीसंघयणीधिइजुत्तोअणासंसी अविकत्थणोअमाईथिर परिवाडीगहियवक्को १ जियपरि
सोजियनिद्दोमज्झत्थोदेसकालभावन्नू आसन्न लद्धपइभोणाणाविहदेसभासन्नू २ पंचविहेआयारेजुत्तोसुत्तत्थतदुभयविहिन्नू आहरण
हेउकारणणयणिउणोगाहणाकुसलो३ ससमयपरसमयविउगंभीरोदित्तिमंसिवोसोमोगुणसयकलिओजुत्तोपवयणसारंपरिकहेउं४
आर्यदेशोद्भूतंसुखाववोधवचनोभवतीत्यतोदेशग्रहणं पैतृकंकुलमिक्ष्वाक्वादिज्ञातकुलञ्चयोत्क्षिप्तभारवहनेन श्राम्यतीतिमातृकीजा
तिस्तत्संपन्नोविनयादिगुणवान्भवति यत्राकृतिस्तत्र गुणावसंतीतिरूपग्रहणं संहननधृतियुतोव्याख्यानादिषु नखेदमेति अनाशंसी
श्रोतृभ्योवस्त्राद्यानाकांक्षति अविकत्थनोहितमितभाषी अमायीसर्वत्रविश्वास्यः स्थिरपरिपाटिपरिचितग्रंथस्यसूत्रार्थगलनासंभवात्
ग्राह्यवाक्यःसर्वत्रास्खलिताज्ञः जितपर्षत्प्राज्ञादिसदसि नक्षोभमुपयाति जितनिद्रःप्रमत्तत्वान्निद्राप्रमादिनः शिष्यान्सुखेनैवप्रबोध
यति मध्यस्थः शिष्येषुसमचित्तोभवति देशकालभावज्ञःसुखेनैवगुणवद्देशादौ विहरिष्यति आसन्नलब्धप्रतिभोद्राक्परवाद्युत्तरदान
समर्थोभवति नानाविधदेशभाषाविधिज्ञश्च नानाविधदेशजाः शिष्याःव्याख्यानसुखंसवाप्स्य•तेज्ञानाद्याचारपंचकयुक्तं श्रद्धेयवचनो
भवतिसूत्रार्थ तदुभयविधिज्ञउत्सर्गापवादप्रपंचंयथावद् ज्ञापयिष्यतिहेतूदाहरणनिमित्तनयप्रपंचज्ञः अनाकुलोहेत्वादीनाचष्टेग्राह
णाकुशलोवह्वीभिर्युक्तिभिर्शिष्यान् बोधयतिस्वसमयपरसमयज्ञः सुखेनैवतत्स्थापनोच्छेदौकरिष्यतिगंभीरः खेदसहःदीप्तिमान्परापृष्ट
ष्यशिष्टहेतुत्वात् शिवस्तदधिष्ठितदेशेमार्य्याद्युपशमनात् सौम्यः सर्वजननयनमनोरमणीयगुणशतकलितः प्रश्रयादिगुणोपेतः एवं
विधःसूरिःप्रवचनानुयोगे योग्यो भवति तस्यचानुयोगस्य महापुरस्येवत्वार्यनुयोगद्वाराणिव्याख्यांगानिभवंति तद्यथाउपक्रमोनिक्षे
पोनुगमोनयःतत्रोपक्रमणमुपक्रमः उपक्रम्यतेनेनास्मादस्मिन्नितिचोपक्रमः व्याचिख्यासितशास्त्रस्यसमीपानयनमित्यर्थः सचशास्त्रीय
लौकिकभेदाद्द्विधातत्र शास्त्रीयः आनुपूर्वीनामप्रमाणंवक्तव्यतार्थाधिकारः समवतारश्चेति लौकिकोनामस्थापनाद्रव्यक्षेत्रकालभाव
भेदात् षोढैव निक्षेपणमनेनास्मादस्मिन्नितिवानिक्षेपः उपक्रमानीतस्यव्याचिख्यासितशास्त्रस्यनामादिन्यसनमित्यर्थः सचत्रिविध
स्तद्यथा ओघनिष्पन्नोनामनिष्पन्नः सूत्रालापकनिष्पन्नश्चतत्रौघनिष्पन्नोङ्गाध्ययनादिसामान्याभिधानन्यासः नामनिष्पन्नआचारश
स्त्रपरिज्ञादिविशेषाभिधाननामादिन्यासः सूत्रालापकनिष्पन्नश्चसूत्रालापकानांनामादिन्यसनमिति अनुगमनमनेनास्मादस्मिन्निति
वानुगमःअर्थकथनमित्यर्थः सचद्विधानिर्युक्त्यनुगमः सूत्रानुगमश्चेतितत्र निर्युक्त्यनुगमस्त्रिविधस्तद्यथानिक्षेपनिर्युक्त्यनुगमःउपोद्घात
निर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति तत्र निक्षेपनिर्युक्त्यनुगमोनिक्षेपएव सामान्यविशेषाभिधानयोरोघनिष्पन्ननामनि
ष्पन्नाख्यौ निक्षेपाख्यामनुगतः सूत्रस्पर्शिया वक्ष्यमाणलक्षणश्चेति उपोद्घातनिर्युक्त्यनुगमश्चाभ्यां द्वारगाथाभ्यामनुगन्तव्यस्तद्यथा

उद्दे सेणिद्दे सेयणिग्गमे खेत्तकालपुरिसेयकारण पच्चयलक्खणएसमोयारणाणुमए किंकतिविहंकस्सकहिंकेसुकहंके चिरंहवइकालं कइसंभरमविरहियं भवागरिसफासणणिरुत्ती सूत्रस्पर्शिकनिर्युक्त्यनुगम: सूत्रावयवानांनये: साक्षेपपरिहारमर्थकथनं सचसूत्रेस तिभवति सूत्रंच सूत्रानुगमेसचसूत्रोच्चारणरूप:पदच्छेदरूपश्चेति अनन्तधर्माध्यासितंवस्त्वेकेनैवधर्मेणनयन्तिपरिच्छिन्दन्तीतिज्ञान विशेषानयास्तेचनैगमादय: सप्तेतिसांप्रतमाचारांगस्योपक्रमादीनामनुयोगद्वाराणां यथा योगं किञ्चिद्विभणिषुरशेषप्रत्यूहोपशमना यमंगलार्थं प्रेक्षापूर्वकारिणां च प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनप्रतिपादिकां निर्युक्तिकारोगाथामाह वंदित्तुसव्वसिद्धे इत्यादि तत्र वन्दित्वासर्वसिद्धान्जिनांश्चेति मङ्गलवचनं अनुयोगदायकानित्येतत्सम्बन्धवचनमपिआचारस्येत्यभिधेयवचनं निर्युक्तिंकरिष्ये इति प्रयोजनकथनमितितात्पर्यार्थ:अवयवार्थस्तुवंदित्वेति वदिअभिवादनस्तुत्योरित्यर्थद्वयाभिधायीधातुस्तत्राभिवादनंकायेन स्तुतिर्वाचा नयोश्चमन:पूर्वकत्वात्करणत्रयेणापिनमस्कार आविदितोभवति सितंध्मातमेषामिति सिद्धाप्रक्षीणाशेषकर्माण: सर्वेचते सिद्धाश्चसर्व सिद्धा:सर्वग्रहणं तीर्थातीर्थानन्तरपरंपरादिसिद्धप्रतिपादकंतान्वंदित्वेतिसम्बन्ध: सर्वत्र योज्य:रागद्वेषजितोजिनास्तीर्थकृतस्तानपि सर्वानतीतानागतवर्त्तमान सर्वक्षेत्रगतानिति अनुयोगदायिन: सुधर्मस्वामिप्रभृतयोयावदस्यभगवतोनिर्युक्तिकारस्य भद्रबाहुस्वामि नश्चतुर्दशपूर्वधरस्याचार्यौतस्तान् सर्वानित्यनेन चाम्नायकथनेन स्वमनीषिकाव्युदास: कृतोभवति वंदित्वेति क्त्वाप्रत्ययस्योत्तरक्रिया सव्यपेक्षत्वादुत्तरक्रियामाह आचारास्य यथार्थनाम्न: भगवतइतिअर्थधर्मप्रयत्न गुणभाजस्तस्येवंविधस्य निश्चयेनार्थप्रतिपादिकायुक्ति निर्युक्तिस्तांकीर्त्तयिष्येऽभिधास्ये इति अंतस्तत्वेननिष्पन्नां निर्युक्तिंवहिस्तत्त्वेन प्रकाशयिष्यामीत्यर्थ: यथाप्रतिज्ञातमेवविभणिषुर्निक्षे पार्हाणिपदानि तावत्सङ्कल्य्याचार्य: संपिण्ड्यकथयति आयारेत्यादिआचारअङ्गश्रुतस्कन्धब्रह्मचरणशस्त्रपरिज्ञासंज्ञादिशामित्येतेषां निक्षेप:कर्त्तव्य इतितत्राचारब्रह्मचरणशस्त्रपरिज्ञाशब्दानामनिष्पन्नेनिक्षेपेद्रष्टव्या अंगश्रुतस्कन्धशब्दा ओघनिष्पन्ने संज्ञादिक्शब्दौ सूत्रालापकनिष्पन्ने निक्षेपेद्रष्टव्याविति एतेषां मध्ये कस्य कतिविधोनिक्षेप इत्यत आह चरणेत्यादि। चरणदिग्वर्जानांचतु र्विधोनिक्षेप: चरणस्य षट्विध: दिक्शब्दस्य सप्तविधोनिक्षेप अत्रचक्षेत्रकालादिकं यथासम्भवमायोज्यं नामादिचतुष्टयंसर्वव्यापीति दर्शयितुमाह जत्थयजमित्यादियत्रचरणदिक्शब्दादौ यंनिक्षेपं क्षेत्र कालादिकं जानीयात्तं तत्रनिरवशेषं निक्षिपेद्यत्र तुनिरवशेषं नजानीयादाचाचाराङ्गादौ तत्रापिनामस्थापनाद्रव्यभावचतुष्कात्मकंनिक्षिपंनिक्षिपेदित्युपदेशइतिगाथार्थ:प्रदेशांतरप्रसिद्धस्यार्थस्य लाघवमिच्छतानिर्युक्तिकारेणगाथाभ्यधायि आयारे इत्यादि क्षुल्लिकाचारकथायामाचारस्य पूर्वोद्दिष्टोनिक्षेपोङ्गस्यतुचतुरङ्गाध्ययन इति यश्चात्रविशेष: सोभिधीयते भावाचारविषयइतियथाप्रतिज्ञातमाहतस्येत्यादिगाथातस्यभावाचारस्य एकार्थाभिधायिनोवाच्या तथाकेनप्रकारेण प्रवृत्ति: प्रवर्त्तनमाचारस्याभूत्तच्चवाच्यंतथाप्रथमांगताचवाच्यातथागण्याचार्यस्तस्यकतिविधंस्थानमिदमितिचवाच्यं तथा परिमाणमियत्तावाच्या तथा किं क्व समवतरतीत्येतच्च वाच्यं तथासारश्चवाच्य इत्येभिर्द्वारै: पूर्वस्मान्नावाचारादस्यभेदोना नात्वमिति पिण्डार्थ: अवयवार्थं तुनिर्युक्तिकृदेवाभिधातुमाह आयारे इत्यादि आचर्य्यते आसेव्यतइत्याचार:सचनामादिश्चतुर्द्धा तत्रज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोद्रव्याचारो अनयागाथयानुसर्त्तव्य: णामणधोयणवासणसिक्खावणसुकरणाविरोहीणिदव्वाणि जाणिलोएदव्वाचारंवियाणाहिभावाचारोद्विधालौकिकोलोकोत्तरश्चतत्रलौकिक: पाषंडिकादय:पंचरात्रादिकं यत्कुर्वन्तिसविज्ञेयो लोकोत्तरस्तुपञ्चधातत्रज्ञानादिकस्तत्र ज्ञानाचारोष्टधातद्यथाकालेविणएवहुमाणेउवहाणे तहाणिण्हवणे विंजण अत्थतदुभए अट्ठविहोणाणमायरो दर्शनाचारोप्यष्टधैव तद्यथानिस्संकियनिक्कंखियनिव्वितिगिच्छाअमूढदिट्ठीयउववूहथिरिकरणेवच्छलपभावणे अट्ठ चारित्राचारोप्यष्टधैव तिन्नेवयगुत्तीओपंसमिइओअट्ठमिलियाओ पवयणमाईओइमाता सुट्ठिओचरणसंपन्नोतपआचा रोद्वादशधा तद्यथा अणसणमूणोयरियावित्तीसंखेवणंरसच्चाओ कायकिलेसोसंलीणयायवज्झोतवोहोइ पायच्छित्तंविणओवेयाव च्चंतहेवसज्झाओ ज्झाणंउस्सग्गोवियअब्भिंतरोतवोहोइ वीर्याचारस्त्वनेकधा अणिगूहियबलविरिओपरक्कमइजोजहुत्तमाउत्तो

हुं जइवनचायामंनादव्वोवीरियायारो एषपंचविधआचार एतत्प्रतिपादकश्चायमेवग्रन्थविशेषोभावाचार: एवंसर्वत्र योज्यं इदानींमा
चालाआचाल्यतेनेनेतिनिविडकर्मादीत्याचाल: सोपिचतुर्धाव्यतिरिक्तोवायु: भावाचालस्वयमेवज्ञानादि पंचधाइदानीमागालआ
गालनमागालसमप्रदेशावस्थानं सोपिचतुर्द्धाव्यतिरिक्तउदकादेर्निम्नप्रदेशावस्थानं भावागालोज्ञानादिकएकस्यात्मनि रागादिर
हितवस्थानमितिकृत्वा इदानीमाकार: आगत्यतस्मिन्कुर्वंतीत्याकार नामादिस्तत्रव्यतिरिक्तारजतादिर्भावाकरोयमेव ज्ञानादिस
त्प्रतिपादकश्चायमेवग्रंथोनिर्जरादिरत्नानामवलाभात् इदानीमाश्वासआश्वसंत्यस्मिन्नित्याश्वासो नामादिस्तत्रव्यतिरिक्तोयानपात्र
द्वीपादिभावाश्वासोज्ञानादिरेवइदानीमादर्श: आदृश्यतेअस्मिन्नित्यादर्शोनामादिर्व्यतिरिक्तो दर्पणभावादर्शउक्तएवयतोस्मिन्निकर्त्त
व्यतादृश्यते इदानीमंगंअज्यतेव्यक्तीक्रियतेअस्मिन्नित्यंगं नामाद्येवस्तत्रव्यतिरिक्तं शिरोबाह्वादिभावांगमयमेवाचार:इदानीमाचीर्ण
मासेवितंतच्चनामादिषोढा तत्रव्यतिरिक्तं द्रव्याचीर्णं सिंहादेस्तृणादिपरिहारेण पिशितभक्षणंक्षेत्राचीर्णं वाल्हीकेषुसक्तवकोंकणेषु
पेयाकोलाचीर्णं त्विदं सरसीचंदणपंकोअग्ग् वइसरसायगंधकासाईपाडलिसिरीसमल्लियपियाइं कालेनिदाहंमि भावाचीर्णं तुज्ञा
नादिपंचकंतत्प्रतिपादकश्चाचारग्रंथ इदानीमाजातिराजायंतेतस्मामित्याजाति: सापिचतुर्द्धाव्यतिरिक्तामनुष्यादिजाति: भावाजा
तिर्ज्ञानाद्याचारप्रसूतरयमेवग्रन्थइतिइदानीमामोक्षआमुच्यं तेस्मिन्नित्यामोक्षणंवामोक्षोनामादिस्तत्रव्यतिरिक्तोनिगडादे:भावा
मोक्षाकर्मणिकोइंटनमयंपसेततृणाचश्चायमेवाचारइतिएतेकिंचिद्विशेषादेकमेवार्थंविशिंपंतप्रवर्त्तंतइत्येकार्थिकायकपुरन्दरादिवत्
एकार्थाभिधायिनांचशक्रइंद्रइति वंबातुलोस्यादिप्रतिपत्यर्थंसुखदृष्टनं उक्तं चवंधाणुलोमयाबलुसत्थंमियलाववं असम्मोहोसंतगुणदीव
णाविपएगट्टंगुणाहवंतेए इदानींप्रवर्त्तनाद्वारंकदापुनर्भगवताचारप्रणीतइत्यतआह सव्वेसिमित्यादिसर्वेषांतीर्थंकराणांतीर्थप्र
वर्त्तनादावाचारार्थं प्रथमतयाभूद्भवतिभविष्यतिचतत: शेषांगार्थइतिगणधराअप्यनयैवानुपूर्व्यासूत्रतयाग्रन्थंतीति इदानींप्रथमत्वे हे
हेतुमाह आयारोइत्यादि प्रथमाचारोद्वादशानामप्यंगानां प्रथमसंगमित्तत्रकारणमाह यतोत्रमोक्षोपायश्चरणकरणंप्र
तिपाद्यतेएषचप्रवचनसार: प्रधानंमोक्षहेतुप्रतिपादनादत्रचस्थितस्यशेषांगाध्ययनयोग्यत्वादस्यप्रथमतयोपन्यासइतिइदानींगणिद्वा
रंसाधुवागणिगुणगणोस्यागण: सोस्यास्तीतिगणीआचाराचत्तंचगणित्वमितिप्रदर्शयन्नाहआयारम्मीत्यादियस्मादाचाराध्ययनात्क्षां
त्यादिकश्चरणकरणात्मकोवाश्रमणधर्म परिज्ञातोभवतितस्मात्सर्वेषां गणित्वकारणानामाचारधरत्वं प्रथममाद्यप्रधानंवागणिस्थान
मिति इदानींपरिमाणंकिंपुनरस्याध्ययनत: पदतश्चपरिमाणमित्यतआहणवेत्यादि तत्राध्ययनतोनवब्रह्मचर्याभिधानाध्ययनात्मको
वेदइति विदंत्यस्माद्धेयोपादेयपदार्थानितिवेद क्षायोपशमिकभाववर्त्त्ययमाचार:सहपञ्चभिश्चूडाभिर्वर्त्ततइतिसपंचचूडश्चभवतिउक्त
शेषानुवादिनीचूडा तत्रप्रथमापिंडेसणासेज्जरियाभासज्जायायवत्थपाएसा उग्गहपडिमत्तिसप्ताध्ययनात्मिका द्वितीयासत्तसत्तिकया
तृतीयाभावनाचतुर्थीविमुक्ति पञ्चमीनिशीथाध्ययनंबहुबहुतररोपदेशांति तत्रचतुश्चूलिकात्मकद्वितीयश्रुतस्कंधप्रक्षेपाद्बहु: निशीथा
स्यपंचमचूलिकाप्रक्षेपाद्बहुतरोनंतगमं पर्यायात्मकविवक्षयाबहुतमश्च पदाग्रेणपदप्रमाणेनभवतीति इदानीमुपक्रमांतर्गतसमव
तारद्वारंतत्रताश्चूडानवसुब्रह्मचर्याध्ययनेष्ववतरंतीतिदर्शयितुमाह आयारेइत्यादिसत्ये इत्यादिपंचेत्यादिउक्तानार्था नवरमाचारा
ग्राणिचूलिका: द्रव्याणिधर्मास्तिकायादीनिपर्याया अगुरुलघ्वादयतेषामनंतभागेव्रतानामवतारइतिकथंपुनर्महाव्रतानां सर्वद्रव्येष्वव
तारइतितदाह छज्जीवणियाइत्यादिस्पष्टाकथंपुनर्महाव्रतानां सर्वद्रव्येष्ववतारोनसर्वपर्यायेष्वित्युच्यते येनाभिप्रायेणचोदितवांस्त
माविष्कर्तुमाहगाणुसव्वगमपएसाणंतगुणंपढमसंजमट्ठाणं छव्विहपरिवड्ढीएछट्ठाणासंखयासेढीअन्ने केएन्नायानेगुवउत्ताचरित्तवि
सयंमि जेतन्नोणंतगुणातेसिंतमणंतभागम्मि अन्ने केवलगम्मत्तितेमइ तेयकेतदक्खिया एवंपिदोन्नतुल्लाणाणंतगुणत्तणंजुत्तंचोयंती
मुणाएटं मणपज्जायातेणतप्पमाणेसा इहपुणचरित्तमेत्तोवउगिणोतेणतेथोवा अयमाशयार्थानिगत नन्वित्यसूयायांसंयमस्थानान्यसं
ख्यातानितायद्भवन्ति तेषांयज्जघन्यंतदविभागपलिच्छेदेनबुध्द्याछिद्यमानं अनंताविभागपलिच्छेदात्मकंभवति तच्चपर्यायसंख्यानिर्दिष्ट

सर्वाकाशप्रदेशसंख्यायाअनंतगुणंसर्वनभ प्रदेशवर्गीकृतप्रमाणमित्यर्थ: ततोद्वितीयादिस्थानैरसंख्यात गच्छगतैरनंतभागादिकयाट्ट
द्यूपट्स्थानकानामसंख्येयस्थानगताश्रेणिर्भवति एवंचैकमपिस्थानंसर्वपर्यायान्वितंनशक्यते परिच्छेत्तुंकिंपुनस्सर्वाण्यपीत्यत: केन्येपर्याया
येषामनंतभागेव्रतानिवर्तिरन्निति स्थानमतिरन्ये केवलगम्याइतीदमुक्तंभवति केवलगम्याप्रज्ञापनीयपर्य्यायाणामपितत प्रथपादइत्व
मेवमपिज्ञानज्ञेयसूत्ल्यत्वात्तुल्याएवनानंतगुणाइति अत्राचार्य्याआह यासौसंयमस्थानश्रेणिनिरूपितासासर्वाचारित्रपर्य्यायैर्ज्ञानेद
र्शनपर्यायसहिते परिपूर्णातत्प्रमाणासर्वाकाशप्रदेशानंतगुणा इहपुनश्चारित्रमात्रोपयोगित्वात्पर्यायानं तभागवर्त्तित्वमित्यदोष इदा
नींसारद्वारंक:कस्यसारइत्याहअंगाणमित्यादिस्पष्टाकेवलमनुयोगार्थोव्याख्यानभूतोर्थस्तस्यप्ररूपणायथास्वंविनियोगइतिअन्यच्चसारो
इत्यादिस्पष्टैवइदानींश्रुतस्कंधपदयोर्नामादिनिक्षेपादिकंपूर्ववद्विधेयंभावेनचेहाधिकारभावश्रुतस्कंधश्चब्रह्मचर्यात्मकइत्यतोब्रह्मचर
णशब्दौनिक्षेप्तव्याविताहबंभमीत्यादि तत्रब्रह्मनामादिचतुर्द्धातत्रनामब्रह्मेत्यभिधानं असद्भावस्थापनाअक्षादौसद्भावस्थापनाप्र
तिविशिष्टयज्ञोपवीताद्याकृतिश्चर्द्धपादौद्रव्येअथवास्थापनायांब्राह्मणोत्पत्तिर्वक्तव्यातत्प्रसंगोनवसप्तानांवर्णानांनवानांचवर्णांतराणामु
त्पत्तिर्भणनीयेतियथाप्रतिज्ञातमाह एक्काइत्यादियावन्नाभेयोभगवान्राज्ञापि राजलक्ष्मीमध्यास्तेतावदेकैवमनुष्यजातिस्तस्यैवराज्यो
त्पत्तौभगवंतमेवाश्रित्ययेस्थितास्तेचक्षत्रियायेशेषाश्च शोचनाद्रोदनाच्चशूद्रा पुनरग्न्युत्पत्तावयस्कारादि शिल्पवाणिज्यवृत्त्यावेशनाद्वैश्या
भगवतोज्ञानोत्पत्तौभरतकाकणीलांछनाच्छ्रावकाएवब्राह्मणाजज्ञिरे एतेशुद्धास्त्रयश्चान्येगाथान्तरित गाथायाप्रदर्शयिष्यन्ते सांप्रतंव
र्णवर्णान्तरनिष्पन्नसंख्यानमाह संजोगेइत्यादिसंयोगेनषोडशवर्णा समुत्पन्नास्तत्रसप्तवर्णानवतुवर्णान्तराणि एतच्चवर्णवर्णान्तरवि
कल्पद्वयंस्थापनाब्रह्मेतिज्ञातव्यंसांप्रतंपूर्वसूचितंवर्णत्रयमाह यदिवाप्रागुद्दिष्टानुसप्तवर्णाहएगइत्यादिप्रकृतयश्चतस्त्रोपिब्राह्मणाक्षत्रिय
वैश्यशूद्राख्यास्तासामेवचतसृणामनन्तरयोगेनप्रत्येकंवर्णत्रयोत्पत्तिस्तद्यथाद्विजेनक्षत्रिययोषितोजातप्रधानक्षत्रियसंकरक्षत्रियोवाएवं
क्षत्रियेणवैश्ययोषितोवैश्येनशूद्रायांप्रधानसंकाभेदौवक्तव्याविल्येवंसप्तवर्णाभवंति अनंतरेणयोगेषुभवाआनंतरास्तेषुचरमवर्णव्यपदेशोभव
तिब्राह्मणेनक्षत्रियायाक्षत्रियोभवतीत्यादिसचस्वस्थानेप्रधानोभवतीतिभावइदानींवर्णान्तराणांनवानांतान्याह अंबेत्यादिअम्बष्टउग्र:
निषाद: अयोगवमागध:सूत:क्षत्ताविदेहचांडालश्चेति कथमेतेभवंतीत्याह एगंतेइत्याहपडिलोमेइत्यादि वीयंतरिएएइत्यादि
आसामर्थोयंयंत्रकादवसेयस्तच्चेदं एतानिवर्णवर्णांतराणि इदानीवर्णान्तराणांसंयोगोत्पत्तिमाह उग्गेणेत्यादिसुद्देणेत्यादिअनयोर
प्यर्थोयन्त्रकादवसेय:तच्चेदं गतंस्थापनाब्रह्म इदानींद्रव्यब्रह्मप्रतिपादनायआह दव्वमित्यादिज्ञशरीरभव्यशरीरव्यतिरिक्तंशाक्यपरि
व्राजकादीनामज्ञानानुगतचेतसावस्तिनिरोधमात्रं विधवाप्रोषितभर्तृकादीनांच कुलव्यवस्थार्थंकारितानुमतियुक्तं द्रव्यब्रह्मभावब्रह्म
तुसाधूनांवस्तिसंयमोष्टादशभेदरूपोप्ययंसंयमएव सप्तदशविधसंयमाभिन्नरूपत्वादस्येतिअष्टादशभेदास्त्वमीदिव्यात्कामरतिसुखात्त्रिवि
धंत्रिविधेनविरतिरितिनवकं औदारिकादपितथातद्ब्रह्माष्टादशविकल्पंचरणनिक्षेपार्थमाहचरणमित्यादिचरणंनामादिषोढाव्यतिरि
क्तं द्रव्यचरणंत्रिधाभवतिगतिभक्षणगुणभेदात्तत्रगतिचरणंगमनमेवआहारचरणंमोदकादिगुणचरणंद्विधा:लौकिकंलोकोत्तरंचलौकि
कंयतद्रव्यार्थंहस्तिशिक्षादिकवैद्यकादिकंवाशिक्षंतेलोकोत्तरंसाधूनामनुपयुक्तचरणमुदायिनृपमारकादेर्वाचेत्रचरणंय स्मिन्क्षेत्रेगत्या
हारादिचर्य्यतेव्याख्यायतेवाशब्दसामान्यान्तर्भावाद्वाशालिक्षेत्रादिचरणमिति कालेप्येवमेवभावमाह भावेइत्यादिभावचरणमपिगत्या
हारगुणभेदात्त्रिधातत्रगतिचरणंसाधोरुपयुक्तस्ययुगमात्रदत्तदृष्टेर्गच्छत्भक्षणचरणमपिशुद्धं पिंडमुपभुंजानस्यगुणचरणमप्रशस्तंमि
थ्यादृष्टीसम्यग्दृष्टीनामपिसनिदानंप्रशस्तंतेषामेवकर्मोद्देशनार्थंलोकोत्तरगुणकलापविषयमिहवानैवाधिकारोयतोनवाप्यध्ययनानिमू
लोत्तरगुणस्थापनानिर्जरार्थमनुशील्यन्तेएतेषांचान्वार्थाभिधानानिदर्शयितुमाह सत्थइत्यादिअट्ठमएइत्यादिस्पष्टे केवलमित्येषनवा
ध्ययनरूपआचारोद्वितीयश्रुतस्कंधाध्ययनानितु शेषाण्याचाराग्राणीतिसांप्रतमुपक्रमांतर्गतोर्थाधिकारोद्विधाअध्ययनार्थाधिकारउद्देशा
र्थाधिकारश्चतत्राद्यमाह जिअइत्यादिणिस्संगइत्यादि तत्रशस्त्रपरिज्ञायामयमर्थाधिकारो जियसंजमोत्ति जीवेषुसंयमोजीवसंयम

स्तेषुहिंसादिपरिहार सचजीवास्तित्वपरिज्ञानेसति भवत्यतोजीवास्तित्वविरतिप्रतिपादनमत्रार्थाधिकार लोकविजयेतुलोकोजहबज्झ इजहयतंपजहियव्वंति विजितभावलोकेनसंयमस्थितेन लोकोयथाबध्यतेअष्टविधेनकर्मणा यथाचतत्प्रहातव्यंतथाज्ञातव्यमित्ययमर्थाधिकार तृतीयेत्वयंसंयमस्थितेनजितकषायेणानुकूल प्रतिकूलोपसर्गनिपातेसुखदुःखतितिक्षाविधेयेति चतुर्थेत्वयंप्राक्तनाध्ययनार्थसंपन्नेनतापसादिकष्टतपः सेविनामष्टगुणैश्वर्यसमुद्वीक्ष्यापि दृढसम्यक्त्वेनभवितव्यमिति पंचमेत्वयंचतुरध्ययनार्थस्थितेना सारपरित्यागेनलोकसाररत्नत्रयोद्युक्तेनभाव्यमिति षष्ठेत्वयंप्रागुक्तगुणयुक्तेन निसंगतायुक्तेनाप्रतिबद्धेनभवितव्यं सप्तमेत्वयंसंयमादिगुणयुक्तस्य कदाचिन्मोहसमुत्था परीषहोपसर्गावाप्रादुर्भवेयुस्तेसम्यक्सोढव्याः अष्टमेत्वयंनिर्याणमंतक्रियासा सर्वगुणयुक्तेनसम्यग्विधेयेति नवमेयंअष्टाध्ययनप्रतिपादितोर्थ सम्यगेवंवर्द्धमानस्वामिनाविहितइति तत्प्रदर्शनंचशेषसाधूनामुत्साहार्थं तदुक्तंतित्थयरोचउणाणीसुरमहिउसिज्झियव्वयधुवंमि अणिगूहियबलविरिउसव्वत्थामेसुउज्जमइ किंपुणअवसेसेहिंदुक्खक्खयकारणासुविहिएहिं होंतिनउज्जमियव्वंसपच्चवायंमिमाणुस्से सांप्रतमुद्देशार्थाधिकार शस्त्रपरिज्ञायाअयंजीवइत्यादि तत्रप्रथमोद्देशकेसामान्येन जीवास्तित्वंप्रतिपाद्यंशेषेषुतु षट्सुविशेषेणपृथिवीकायाद्यस्तित्वमिति सर्वेषांचावसानेबंधविरतिप्रतिपादनमिति एतच्चांतेउपात्तवान्प्रत्येकमुद्देशार्थेषुयोजनीयंप्रथमोद्देशकेजीवसद्भावेबंधोविरतिश्चेत्येवमितितत्रशस्त्रपरिज्ञेति द्विपदंनामशस्त्रस्यनिक्षेपमाहद्रव्यमित्यादिशस्त्रस्यनिक्षेपोनामादिश्चतुर्द्धाव्यतिरिक्तं द्रव्यशस्त्रंखड्गाद्यग्निविषस्नेहाम्लक्षारलवणादिकं भावशस्त्रंदुःप्रयुक्तोभावोत्वकरणं तथावाक्कायाविरतिश्चेतिजीवोपघातकारित्वादितिभावः परिज्ञापिचतुर्द्धेत्याहद्रव्यमित्यादि तत्रद्रव्यपरिज्ञाद्विधा ज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाच ज्ञपरिज्ञाआगमभेदाद्द्विधा आगमतोज्ञातानुपयुक्तःनोआगमतस्त्रिधातत्रव्यतिरिक्ताद्रव्यज्ञानपरिज्ञायो यत्द्रव्यंजानीतेसचित्तादिसापरिच्छेद्यद्रव्यप्राधान्यात्द्रव्यपरिज्ञेतिप्रत्याख्यानपरिज्ञाप्येवमेव तत्रव्यतिरिक्तद्रव्यप्रत्याख्यानपरिज्ञा देहउपकरणपरिज्ञानंउपकरणंचरजोहरणादिसाधकतमत्वात् भावपरिज्ञापिद्विधैवज्ञपरिज्ञाप्रत्याख्यानपरिज्ञाच तत्रागमतोज्ञातोपयुक्तश्चनो आगमतस्त्विदमेवाध्ययनंज्ञानक्रियारूपंनोशब्दस्यमिश्रवाचित्वात् प्रत्याख्यानभावपरिज्ञापितथैव आगमतःपूर्ववत्नोआगमतस्तु प्राणातिपातनिवृत्तिरूपामनोवाक्कायकृतकारितानुमतिभेदात्त्रिकात्रयेति गतोनामनिष्पन्नोनिक्षेप सांप्रतमाचारादिप्रदानस्य सुखप्रतिपत्तयेदृष्टांतोपन्यासेनविधिराख्यायते यथाकश्चिद्राजाभिनवनगरनिवेशेच्छया भूखंडानिविभज्यसमतया प्रकृतिभ्योदत्तवांस्तथाकचवरापनयनेशल्योद्धारे भूस्थिरीकरणेपक्वेष्टकापीठप्रासादरचनेरत्नाद्युपादाने चोपदेशंदत्तवांस्ताश्च प्राकृतयस्तदुपदेशानुसारेण तथैवकृत्वायथाभिप्रेतान्भोगानुभुंजिरे अयमत्रार्थोपनयःराजसदृशेनसूरिणाप्रकृति सदृशशिष्यगणस्यभूखंडसदृशःसंयमोमिथ्यात्वकचवराद्यपनीयसर्वोपाधिशुद्धस्यारोपणीयस्तंचसामायिकसंयमं स्थिरीकृत्यपक्वेष्टिकापीठतुल्यानि व्रतान्यारोपणीयानिततप्रासादकल्पोयमाचारोविधेयस्तत्रस्थशेषशास्त्रादिरत्नान्यादत्ते निर्वाणभाक्भवतिसांप्रतसूत्रानुगमे स्खलितादिगुणलक्षणोपेतं सूत्रमुच्चारणीयंतच्चेदं अप्पगंथमहत्थं

संतेणंभगवयाएवमक्खायं इहमेगेसिंणोसण्णाभवइतं जहापुरत्थिमाओवादिसाओ आगओअहमंसि दाहिणाओवादिसाओ आगओअहमंसि पच्चत्थिमाओवादिसाओ आगओअहमंसिउत्तराओवादिसाओ आगओअहमंसि उड्ढाओवादिसाओ आगओअहमंसिअहेदिसाओवा आगओअहमंसि अण्णयरीओवादिसाओअणुदिसाओवाआगओअहमंसि एवमेगेसिंणोणाणंभवतिअत्थिमेआ

भाषा

देवानेरइयावाअट्ठारसङ्कंतिभावदिसा १ इतिवचनात् तं० तेसंज्ञाजिमनकूइतेकहियेच्छये कूंपूर्वदिसियकीआव्योअथवादक्षिणथकीअथवापश्चिमथकी अथवाउत्तरथकी अथवाऊर्द्ध दिशियकी अथवाअधोदिशियकीकूं आव्योछुं तथाअनेरीदिसिअथवाअनुदि

सिविदिसिकहवाइ आग्नेयनैऋतवायवईशान एच्यारिएहनेअंतरालिआठविदिसिहली अनेरीछे इणिपरिवारविदिसिच्यारिदि सिऊर्द्ध अनेअधएतले अढारद्रव्यदिसिजाणिवी एहनेअनुसारिअढारभावदिसिकहियेछे मणुयाक० मनुष्यनाभेद४ संमूर्छिम१क र्मभूमिज२ अकर्मभूमिज३ अंतरद्वीपज४ तथातिर्यंचनाभेद४ बेंद्री१तें द्रीचउरिंद्री३ पंचेंद्री४काय४ पृथिवी१अप्२ तेउ३वाउ४तथा अग्रबीज१मूलबीज२ स्कंधबीज३पर्वबीज४ एवं४ सर्वमिलि१६ देवअनेनारकीमिली१८ एभावदिसिजाणिवी एवमेगेसिंएकजीवने इणिपरिजिमपूर्विंइकह्यो तिमज्ञानावरणीयकर्मनेविशेषिजाण्यो नहुवेजिमकोईएकपुरुषमद्यपानीघूर्णितनेत्र अव्यक्तचित्तमार्गेप ड्योऊंतोसुखिइंवमतोछानिइं लिप्तमानसुखऊपाडीस्वजनादिकिघरिआण्यो परंछाकऊतर्यो पछेइमनजाणेऊंकिहांथकीआ व्योंतिमइहांविशिष्टसंज्ञारहितजीवजाणिवो हिवेवलीएकजीवने अनेरीपुणसंज्ञानहुवेतेकहेछे अत्थिक० माहरोआत्माशरीरनोअधि

दीपिका टीका

र्थमाहसूत्रं तंजहापुरत्थिमाओ वादिसाओआगओ अहमंसिदाहिणाओवादिसाओ आगओअहमंसि पच्चत्थिमाओवादिसाओ आगओअहमंसिउत्तराओ वादिसाओआगओअहमंसि उड्ढाओवादिसाओआगओ अहमंसिअहेदिसाओवाआगओ अहमंसि अन्नयरीओवादिसाओवा अणुदिसाओवाआगओअहमंसि एवमेगेसिंणोणायंभवतिव्याख्या तद्यथेतिप्रतिज्ञानार्थोदाहरणंदिशति अतिसृजतिव्यपदिशति द्रव्यभागंमितिदिग्पूर्वस्यादिश आगतोऽहमस्मि एवंदक्षिणस्यावावाशब्दउत्तरपश्चापेक्षयाविकल्पार्थो अन्नय रिओदिसाओ आगओअहमंसिइत्यनेनदिग्ग्रहणात् प्रज्ञापकदिशश्चतस्रतासामन्तराअष्टौ अपराविदिशःएवंप्रज्ञापकदिशोऽष्टादशप रिगृहीता एवमष्टादशभावदिशोप्यत्रग्राह्याःअथभावदिशांपरिज्ञानायनिर्युक्तिगाथामाहमणुयातिरियाकायातहग्गबीयाच उक्कगाचउ रोदेवानेरइयावाअट्ठारसहुंतिभावदिसा१ व्याख्यामनुष्याश्चतुर्भेदाःतद्यथासम्मूर्छनजाकर्मभूमिजाअकर्मभूमिजाःअंतरद्वीपजाश्चेति तथातिर्यंचोद्वीन्द्रियाः त्रीन्द्रियाश्चतुरिन्द्रियाः पंचेंद्रियाश्चेतिचतुर्द्धाकायाः पृथिव्यप्तेजोवायवश्चत्वारःतथाऽग्रमूलस्कंधपर्वबीजाश्चत्वार एवएतेषोडशदेवनारकप्रक्षेपादष्टादशएभिर्भावैर्भावनाज्जीवो व्यपदिश्यते इतिभावदिगष्टादशभेदेति तत्रासंज्ञिनांनैषोऽववोधोस्तिसं ज्ञिनामपिकेषांचिद्भवति यथाहऽमुष्यादिशःसमागतः इहेतिएवमेगेसिंनोणायंभवतित्ति एवमनेनप्रकारेणप्रतिविशिष्टदिग्विदिगाग मनंनैकेषांविदितंभवतीति एतदेवनिर्युक्तिकृदाह केसिंचिनाणसन्ना अत्थिकेसिंचनत्थिजीवाणं कोहंपरंमिलोए आसीकयराए दि साओवा१ व्याख्याकेषांचिज्जीवानां ज्ञानावरणीयक्षयोपशमवतां ज्ञानसंज्ञास्तिकेषांचित्तु तदावृतिमतांनभवतीति यादृशीसंज्ञान भवतितांदर्शयति कोहंपरस्मिन्लोकेजन्मनि मनुष्यादिरासंअनेनभावदिगुपात्ताकतरस्यावादिशः समायातइत्यनेनतुप्रज्ञापकदिग्गृ हीतायथाकश्चिन्मदिराघूर्णितलोचनोव्यक्तमनोविज्ञानो रथ्यानिपतितः श्वर्गालकदम्बगणावलिह्य मानवदनोऽपहृमानीतोमदात्ययेन जानातिकुतोहमागतइति तथाप्राकृतोमनुष्यादिरपीतिभावार्थाः नकेवलमेषैवसंज्ञानास्ति अपरापिनास्तीतिसूत्रकृदाह अत्थिमे

शीलंगाचार्य्यकृतटीका

बत्तीसादोसविरहियंजंच लक्खणजुत्तंसुत्तं अट्ठहियगुणेहिं उववेयमित्यादितच्चेदंसूत्रं सुयंमेआउसंतेणंभगवयाएवमक्खायंइहमेगे सिंणोसन्नाभवति अस्यसंहितादिक्रमेणव्याख्यासंहितोच्चारितैवपदच्छेदस्त्वयं श्रुतंमयाआयुष्मन्तेनभगवता एवंव्याख्यातंइहएकेषांनो संज्ञाभवतिएकंतिङंतंशेषाभिनिसुपंतानिगतः सपदच्छेदसूत्रानुगमःसांप्रतंसूत्रपदार्थाःसमुन्नीयतेभगवान्सुधर्म्मस्वामीजंबूनाम्नाइद मा चष्टेयथाश्रुतमाकर्णितमवगतमवधारितमिति यावदनेनस्वमनीषिकाव्युदासोमयेतिसाक्षान्नपुन पारंपर्येणआयुष्मन्निितिजात्या दिगुणसंभवेपिदीर्घायुष्मान्त्वगुणोपादाना दीर्घायुरविच्छेदेनशिष्योपदेशप्रदायकोयथास्यातृइत्याचारस्यव्याचिख्यासितत्वात्तदर्थस्यच तीर्थंकृत्प्रणीतत्वादितिसामर्थ्यप्रापितं तेनेतितीर्थंकरमाह यदिवाआमृशताभगवत्पादारविंदमनेनविनयआवेदितोभवति आवसता वातदंतिकइत्यनेनगुरुकुलवासः कर्त्तव्यइत्यावेदितंभवति एतच्चार्थद्वयंआमुसंतेणेत्यतत्पाठांतरमाश्रित्यावगंतव्यमितिभगवतेतिभग

ऐश्वर्यातिषडर्थात्मकः सोस्यास्तीतिभगवान्तेनएवमिति वक्ष्यमाणविधिनाआख्यातमित्यनेन कृतकत्वव्युदासेनार्थरूपतया आगमस्य नित्यत्वमाह इहेतिचेतिप्रवचनेआचारेशस्त्रपरिज्ञायांव्याख्यातमितिसंबंधोयदिवेहेतिसंसारेएकेषांज्ञानावरणावाहतानांप्राणिनांनो संज्ञाभवतिसंज्ञानंसंज्ञास्मृतिरवबोधइत्यनर्थान्तरंसानोजायतइत्यर्थउक्तंचपदार्थः पदविग्रहस्तुसामासिकपदाभावादप्रकटनमिदानीं चालना ननुचाकारादिकप्रतिषेधकलघुशब्दसंभवेसति किमर्थंनोशब्देनप्रतिषेध इत्यत्रप्रत्यवस्था सत्यमेवंकिंतुप्रेक्षापूर्वकारितयानोशब्दो पादानं सचेत्यमन्येनप्रतिषेधेनसर्वनिषेधः स्याद्यथानघटोघटइतिचोक्ते सर्वात्मनाघटनिषेध सचनेष्यतेयतःप्रज्ञापनायांदशसंज्ञाःसर्व प्राणिनामभिहितास्तासांसर्वासांप्रतिषेधःप्राप्नोतीतिकृत्वातास्चेमाःकइणंभंतेसन्ना ओपन्नत्ताओगोयमादससन्नाओपन्नत्ताओतंजहा आहारसन्नाभयसन्नामेहुणसन्ना परिग्गहसन्नाकोहसन्नामाणसन्नामायासन्ना लोभसन्नाओहसन्नालोगसन्नत्ति आसांचाप्रतिषेधे स्पष्टोदोषोयतोनोशब्देनप्रतिषेधनमकारितोयं सर्वनिषेधवाचीदेशनिषेधवाचीचतथाहिनघटइत्युक्ते यथाघटाभावमात्रंप्रतीयते तथाप्रकरणादिप्रसक्तस्यविधानंसपुनर्विधीयमान प्रतिषेध्यावयवोग्रीवादिप्रतिषेध्यादन्योवापटादि प्रतीयतइतितथाचोक्तंप्रतिषेधयति समस्तंप्रसक्तमर्थंचजगतिनोशब्दः सपुनस्तदवयवोवातस्मादर्थान्तरंवास्यादिति एवमिहापिनसर्वसंज्ञानिषेधोपितु विशिष्टसंज्ञानिषेधो यथात्मादिपदार्थस्वरूपं गत्यागत्यादिकंज्ञायतेतस्यातिषेधइति सांप्रतंनिर्युक्तिकृत् सूत्रावयवनिक्षेपार्थमाह दव्वेइत्यादिसंज्ञानामादि भेदाच्चतुर्द्धाः नामस्थापनेक्षुण्णे ज्ञशरीरभव्यशरीरव्यतिरिक्ता सचित्ताचित्तमिश्रभेदास्त्रिधासचित्तेन हस्तादिद्रव्येणपानभोजनादि संज्ञाअचित्तेनध्वजादिनामिश्रेण प्रदीपादिनासंज्ञानंसंज्ञाअवगमइति ज्ञात्वाभावसंज्ञापुनर्द्विधा अनुभवनसंज्ञाज्ञानसंज्ञाच तत्राल्प व्याख्यावत्त्वात्तावत्ज्ञानसंज्ञांदर्शयतिम इहोइजाणणापुण्यक्तिमननंमतिरवबोधःसाचमति ज्ञानादिपंचधातत्रकेवलसंज्ञाक्षायिकीशेषा सुक्षायोपशमिक्य आनुभवनसंज्ञातुस्वकृतकर्मोदयादिसमुत्थाजंतोर्जायतेसाचषोडशभेदेतिदर्शयतिआहारेत्यादिआहाराभिलाषआ हारसंज्ञासाचतैजसशरीरनामकर्मोदयादसातोदयाच्चभवति भयसंज्ञात्रासरूपापरिग्रहसंज्ञामूर्छारूपामैथुनसंज्ञास्त्र्यादिवेदोदयरू पाएताश्चमोहनीयोदयात् सुखदुःखेसंज्ञेसातासातानुभवरूपेवेदनीयोदयजे मोहसंज्ञामिथ्यादर्शनरूपामोहोदयात्विचिकित्सासंज्ञा चित्तविप्लुतिरूपामोहोदयात् ज्ञानावरणीयोदयाच्चक्रोधसंज्ञाअप्रीतिरूपा मायासंज्ञावक्रतारूपालोभसंज्ञागृद्धिरूपा शोकसंज्ञाविप्र लापवैमनस्यरूपा एतामोहोदयजाःलोकसंज्ञास्वच्छंदघटितविकल्परूपालौकिकाचरितायथानसंत्यनपत्यस्यलोकाश्वानोयक्षाविप्रादेवा काकाःपितामहाः वर्हिणांपक्षवातेनगर्भाइत्येवमादिका ज्ञानावरणक्षयोपशमान्मोहोदयाच्चभवतिधर्मसंज्ञाक्षमाद्यासेवनरूपामोह नीयक्षयोपशमाज्जायते एताश्चविशेषोपादानात्पंचेन्द्रियाणांसम्यग्मिथ्यादृशांद्रष्टव्या ओघसंज्ञातुअव्यक्तोपयोगरूपावल्लिवितानारोहणा दिलिंगाज्ञानावरणीयाल्पक्षयोपशमसमुत्थाद्रष्टव्येतिइहपुनर्ज्ञानसंज्ञयाधिकारोयतइहैवनिषिद्धादृशएकेषांनो संज्ञानमवबोधोभव तीति प्रतिषिद्धज्ञानविशेषावगमार्थमाह सूत्रंतं जहेत्यादिशेषोणायंभवतीतियावत् तद्यथेतिप्रतिज्ञातार्थोदाहरणं पुरच्छिमाउत्तिप्रा कृतशैल्यामागधदेशीभाषानुवृत्त्या पूर्वस्यादिशोभिधायकात् पुरच्छिमाशब्दात्पंचम्यंतात्तसानिर्देशः वाशब्दउत्तरपक्षापेक्षयाविकल्पार्थ यथालोकेभोक्तव्यं शायितव्यंवेति एवंपूर्वस्यावादक्षिणस्यावेति दिश्यतीतिदिक् अतिसृजतिव्यपदिशति द्रव्यंद्रव्यभागंवेतिभावः तानि युक्तिकृन्निक्षेप्तुमाह नामेत्यादिनामस्थापनाद्रव्यक्षेत्रतापप्रज्ञापकभावरूपः सप्तधादिग्निक्षेपोज्ञातव्य तत्रसचित्ताद्देर्द्रव्यस्यदिगित्य भिधानंनामदिक् चित्रलिखितजंबूद्वीपादेर्दिग्विभागस्थापनंस्थापनादिक् द्रव्यदिग्निक्षेपार्थमाह तेरसेत्यादिद्रव्यदिग्द्वेधाआगमतो नोआगमतश्च आगमतोज्ञातानुपयुक्तोनोआगमतोज्ञशरीरभव्य शरीरव्यतिरिक्तात्वियं त्रयोदशप्रदेशिकं द्रव्यमाश्रित्ययाप्रवृत्ताख लुखवधारणे त्रयोदशप्रदेशिकंद्रव्यमाश्रित्ययाप्रवृत्ता खलुरवधारणेत्रयोदशप्रदेशिकमेवदिक् नपुनर्द्दशप्रदेशिकं यत्कैश्चिदुक्तमितिप्र देशाःपरमाणवस्तैर्निष्पादितं कार्यद्रव्यन्तावत्स्वचक्षेत्रप्रदेशेष्ववगाढं जघन्यंद्रव्यमाश्रित्यदशदिग्विभागपरिकल्पनातोद्रव्यदिगिय मितितत्स्थापनाविधानकं नवप्रदेशिकमभिलिख्यचतसृषु दिक्षु एकैकस्तद्बहिःकार्या चैवंदिशमाह अट्ठेत्यादितिर्यक्लोकमध्येरत्नप्र

भाष्टथिव्याउपरिवङ्कमध्यदेशेसेर्व्वन्तर्द्वौ सर्व्वक्षुल्लकप्रतरौ तयोरुपरितनस्यचत्वारसंस्याना अधस्तनस्यापिचत्वारस्तयाभूताएवेत्येषो
टाकाशप्रदेशात्मकश्चतुरस्रोरुचकादिशामनुदिशांच प्रभवउत्पत्तिस्थानमितिस्थापनाआसामभिधानान्याहइंदग्गे त्यादिआसामाठौड्डी
विजयद्वारानुसारेणशेषा: प्रदक्षिणतसप्तावसेया ऊर्द्धंविमलातमावाधइति आसामेवस्वरूपनिरूपणायाह दुपएइत्यादि चतस्रोमहा
दिशोद्विप्रदेशाद्याद्विद्विप्रदेशोत्तरवृद्धा विदिशश्चतस्रएकप्रदेशरचनात्मिका अनुत्तराष्टद्विरहिता ऊर्द्धाधोदिक्द्वयंत्वनुत्तरासैवचतु:प्रदे
शादिरचनात्मकं किञ्चअंतोइत्यादिसर्वमित्यन्तर्मध्येसादिकारुचकाद्याइति कृत्वावहिश्चालोकाकाशाश्रयणादपर्यवसिता सर्वाश्चदशाप्य
नन्तप्रदेशात्मिकाभवन्ति सव्वायहवंतिकडजुम्मत्ति सर्वासांदिशांमन्यकेयेप्रदेशास्ते चतुष्कणापक्रियमाणाश्चतुष्कावशेषाभवन्तीतिक
त्वातत्प्रदेशात्मिकाश्च दिशआगमसंज्ञायाकडजुम्मत्तिशब्देनाभिधीयंते तथाचागमकइणंभंतेजुम्मापसत्ता गोयमाचत्तारिजुम्मापसत्ता
तंजहाकडजुम्मे तेउए वायरजुम्मे कलिउए सेकेणट्ठेणंभंतेएवंवुच्चइ गोयमाजेणंरासीचउक्कगावहारेणं अवहीरमाणार चउपज्जव
सिएसियासेणंकडजुम्मे एवंतिपज्जवसिएतेउएजुपज्जवसिए वायरजुम्मेएगपज्जवसिए कलितोतेत्ति पुनरप्यासांसंस्थानमाहसगडुद्धी
त्यादि महादिशश्चतस्रोपिशकटोद्धिसंस्थाना: विदिशश्चमुक्तावलिनिभाउर्द्धाधोदिग्द्वयंरुचकाकारमिति तापदिशमाहजम्मेत्यादिदा
हिणेत्यादितापयतीतिताप आदित्यास्तदाश्रित्यादिक्तापदिक्ताशेषंसुगमं केवलंदक्षिणपार्श्वादिव्यपदेशपूर्वाभिमुखस्येतिद्रष्टव्य: ताप
दिगंगीकरणेनान्योपितापदिशाभवतीति प्रसंगतात्राह जेमंदरस्सेत्यादियेमंदरस्यमेरो पूर्वेणमनुष्यक्षेत्रदिगंगीकरणेन रुचकापेक्षं
पूर्वादिदिक्तंवेदितव्यं तेषामुत्तरोमेरुर्दक्षिणेनलवणइति तापदिगंगीकरणेनशेषंस्पष्टं प्रज्ञापकदिशमाह जत्थयइत्यादिप्रज्ञापकोयत्र
क्वचित्स्थित:दिशांवलग्त्कस्यचिन्निमित्तंकथयति सयदभिमुखस्तिष्टति सापूर्वाष्टष्टतश्चापरेति निमित्तकथनंचोपलक्षणमन्योपिव्याख्या
ताशास्त्रइति शेषदिकसाधनार्थमाह दाहिणेत्यादिएयासिमित्यादि हेट्ठाइन्यादिएअमित्यादिपुव्वाएन्यादिसामुत्थाणीत्यादिहेट्ठाइत्यादि
एतासप्तगाथा:कंठ्यानवरंद्वितीयगाथायां सर्व्वतिर्यग्दिशांबाहल्यंपिंड: शरीरोच्छ्रयप्रमाणमिति सांप्रतमासासंस्थानमाह सोलसइ
त्यादिषोडशापिदितिर्यग्दिश: शकटोद्धिसंस्थानावोद्धव्या: प्रज्ञापकप्रदेशेसंकटावहिर्विशाला नारकादेवाख्येद्वेएव ऊर्द्धाधोगामिन्यौ
शरीराकारेस्तयत: शिरोमूलेपादमूलेचस्वल्पत्वान्मल्लकवुध्नाकारो गच्छंत्यौचविशालेभवतइति आसांसर्वासांतात्पर्यंयंत्रकादवसेयंत
श्चेदंभावदिग्निरूपणार्थमाह मणुयाइत्यादिमनुष्याश्चतुर्भेदास्तद्यथा संमूर्छनजाकर्मभूमिजा अकर्म्मभूमिजा: अंतरद्वीपजाश्चेतितथा
तिर्यंचोद्वीन्द्रियास्त्रीन्द्रियाश्चतुरिंद्रियापंचेंद्रियाश्चेति चतुर्द्धाकायाष्टथिव्यप्तेजोवायवश्चत्वारस्तथाग्रमूलस्कंधपर्ववीजाश्चत्वारएतेषोडश
देवनारकप्रक्षेपादष्टादशएभिर्भावैर्भवनाज्जीवोव्यपदिश्यतइति भावदिगष्टादशभेदेति अत्रचसामान्यदिग्ग्रहणेपि यस्यांदिशिजीवाना
मविगानेनगत्यागतीस्पष्टेसर्वत्रसंभवतस्तयैवेहाधिकारइति तामेवनिर्युक्तिकृत्साक्षाद्दर्शयति भावदिक्भाविनाभाविनीसामर्थ्यादधिकृतै
वयतस्तदर्थमन्यादिशश्चिंत्यंतत्राह पन्नवगेत्यादिपन्नवगदिसाएइत्यादि प्रज्ञापकापेक्षयाअष्टादशभेदादिशोत्रच भावदिशोपितावत्प्रमा
णाएवप्रत्येकंसंभवंतीत्यत: एकैकांप्रज्ञापकदिशांभावदिगष्टादशकेन विध्येत्ताडयेदतोष्टादशाष्टादशकास्तेच संख्यायात्रीणिशतानिचतु
र्विंशत्यधिकानिभवंतीति एतच्चोपलक्षणंतापदिगादावपि यथासंभवमायोजनीयमिति चेत्रदिशितुचस्वेव ममादिक्षुसंभवोनविदि
गादिषुतासामेकप्रदेशिकत्वाच्चतुप्रदेशकत्वाच्चेतिगाथाद्वयार्थ: अयंचदिक्संयोगकलाप अणयरीओदिसाओआगओ अहमंसीत्यनेन
परिगृहीतसूत्रावयवार्थश्चायमिहदिग्ग्राहणात प्रज्ञापकदिशश्चतस्र: पूर्वादिकाऊर्द्धादिगधोदिकपरिगृह्यंते भावदिशस्त्वष्टादशापिच
तुर्दिग्ग्रहणात्तुप्रज्ञापकविदिशोद्वादशेति तत्रासंज्ञिनानैषैववोधोस्तिसंज्ञिनामपिकेषांचिद्भवतिकेषांचिन्नेतियथाहमसुष्यादिशस्समाग
तइहेतिएवमेगेसिंणोणायंभवइत्ति एवमित्यनेनप्रकारेण प्रतिविशिष्टदिग्विदिगागमनं नैकेषांविदितंभवतीत्येतदुपसंहारवाक्यंएतदे
वनिर्युक्तिकृदाह केसिमित्यादि केषां चिज्जीयानां ज्ञानावरणीयक्षायोपशमवतां ज्ञानसंभास्तिकेषांचित्तु तदावृत्तिमतांन भवतीति
यादृक्भूतासंज्ञानभवतितांदर्शयति कोहंपरस्मिन् लोकेजन्मनिमनुष्यादिरासं अनेनभावदिग्गृहीता कतरस्यावादिशस्समायात इत्य

याउववाइएणत्थिमे आयाउववाइए केअहं आसीकेवाइओचुओइहपेच्चाभविस्सामि सेज्जंपुणजाणे
ज्जासहसम्मइयाएपरवागरणेणंअण्णेसिंअंतिएवासोच्चावातंजहा पुरत्थिमाओवादिसाओआगओ
अहमंसि जावअण्णयरीओदिसाओअणुदिसाओवाआगओअहमंसिएवंमेगेसिंजंणातं भवतिअत्थिमे
आयाउववाइएजोइमाओअणुदिसाओवाअणुसंचरइसव्वाओदिसाओअणुदिसाओसोहंसेआयावा

भाषा

ष्ठाताऔपपातिककहतां भवांतरेऊपजणहार एहवोछे अथवानथीएकनें एहवीसंज्ञानथी तथापूर्वेजन्मिहूं कुणनारकीअथवादे
वताअथवानिर्यंच अथमनुष्यहतो एहवुं नजाणेतथाइहांथकीहूं चव्योहतोइणिसंसारमाहि परजन्मिकुणथास्युं एहवुं पुणन
जाणेंहिवसूत्रमाहि इमकह्योएवमेगेसिं एकनेएहवीसंज्ञानहवे तोइमजाणियेकिणिहीएकने थाएपुणएहवोभावलाभे तोजेहनें वि
शिष्टसंज्ञाहवे तेहनोकारणदेखाडेछे सूत्र सेजंक० तेपूर्वोक्तजीवनेदिशिविदिशिनोआगमनतथापूर्वभविहूं कुणहतोआगिलेभविकु
णथास्युं एहवोकोईएकजाणेकोईजाणेपुणजेजाणेतेइमसहसक० सहसम्मइयाएकहतांमतिश्रुतअवधिमनःपर्यवकेवलज्ञानजाति
स्मरणादिकेकरी स्वयमेवगतागतिजाणे सगापुत्रनमिवल्कलचीरीप्रमुखवत् तथापरवागरणेणंपरशब्दिइं तीर्थंकरतेहनेवागरणि
उपदेशेकरीजाणे जिमश्रीगौतमअथवामेघकुमार श्रीमहावीरनेउपदेशे जाण्यो तथाअन्नेसिंतीर्थंकरथकी अनेराअतिशयज्ञानवं
तनेहनेसमीपिसांभलीजाणे जिमछद्मस्थावस्थाइं श्रीमल्लिनेसमीपिसांभलीछ राजाएपूर्वभवस्वरूपजाण्यो तेजाणेतेकहेछे हूं पूर्व
दिशियकीआव्योअथवा दक्षिणपश्चिमउत्तरतथा ऊर्द्धदिशिअधोदिशि अथवाअनेरीदिशिविदिशियकीहूं आव्योएहवोएकने विशि
ष्टज्ञानऊपजेतेकिसुं एमाहरोआत्माऔपपातिक भवांतरसंक्रमणकर्त्ताछे एतलेअसर्वगतमोक्षाम्नत्ति रहितअविनाशीशरीरमात्रव्या
पकएहवुआत्माजाणेतथामाहरो आत्माअमुकीएकदिशिअथवा विदिशियकीअनुसंचरइकहतांगतागतिकरे एहवुं स्मरेएतावतासघली
इं दिशियकीसघलीयेविदिशियकी जेआव्योइणिसंसारमाहि परिभ्रमणकरे सोहंतेहूं एहवोजाणे हिवेजेपूर्वोक्तआत्मानोस्वरूपजा
णेतेकेहवोएसूत्रकारकहेछे सेआ० जेपूर्वादिद्रव्यदिशिनारकादिभावदिशिभ्रमणशील आत्माछेजाणे तेआत्मावादीआत्मानोज्ञाताजे

दीपिका टीका

आयाउववातीएनत्थिमे आयाउववातीएकेअहंआसी केवाइओचुओ इहपेच्चाभविस्सामित्ति अस्तिविद्यतेममास्यशरीरस्याधिष्ठाता
अततिगच्छतिसततंगतिप्रवृत्तआत्माजीवोऽस्तीति किंभूतऔपपातिकः उपपातोजन्मान्तरसंक्रान्तिः उपपातेभवऔपपातिकःइत्यने
नसंसारिणस्वरूपंदर्शयति सएवंभूतआत्माममास्तिनास्तीतिचैवंभूता संज्ञाकेषांचिदज्ञानावष्टब्धचेतसां नजायतेतथाकोहंनारकति
र्यग्मनुष्यादिरासंपूर्वेजन्मनि कोवादेवादिरितोमनुष्यादिजन्मनश्च्युतो विनिष्टइहसंसारेप्रेत्यजन्मान्तरेभविष्यामि उत्प्रश्ने इत्येषाचसं
ज्ञाभवतीतिइहमेगेसिंणोनायंभवइ इत्यनेनकेषांचिदेवसंज्ञानिषेधात् केषांचित्तुभवतीत्युक्तंभवति तत्रसामान्यसंज्ञायाः प्रतिप्राणि
प्रसिद्धत्वात् तत्कारणपरिज्ञानास्येहाकिंचित्करत्वात् विशिष्टसंज्ञयास्तु केषांचिदेवभावात्विशिष्टसंज्ञायाः कारणंसूत्रकृद्दर्शयितुमा
हसेज्जंपुणजाणेज्जासोहंसइति प्राग्दिष्टोज्ञाताविशिष्टज्ञायोपशमादिमान् यदितिप्राग्निर्दिष्टं दिग्विदिगागमनंतथाकोहमभूवमती
तजन्मनिदेवादिकोहंप्रेत्यदेवादिर्भविष्यामि इतिपराम्रष्टतेजानीयादवगच्छेत् इदमुक्तंभवतिनकश्चिदनादौ संसृतौपर्यटन्नस्मान्
दिगागमनादिकंजानीयात्कः पुनर्जानीयात्सएवं सहसंमदियाएपरवागरणेणंअन्नेसिंअंतिएवासोच्चातंजहा पुरत्थिमाओवादिसा
ओवाआगओअहमंसि जावअन्नयरीओवा अणुदिसाओव्याख्या आत्मनासहसदायासन्मतिर्वर्त्तते तयासन्मत्याकश्चित् जानीतेयदि
वास्वमत्यावानापुनः सन्मतिस्वमतिर्वाअवधिमनः पर्यायकेवलज्ञानजातिस्मरणभेदाच्चतुर्विधा तत्रजातिस्मरणंत्वाभिनिबोधिकज्ञान

विशेष:तदेवचतुर्विधयामत्याकश्चिदात्मनोविशिष्टदिक्गत्यागतीजानाति कश्चिच्चपरस्तीर्थकृत्सर्वज्ञस्तस्यैवपरमार्थत:परशब्दवाच्यत्वात् तस्यव्याकरणमुपदेशस्तेनजीवास्तद्भेदांश्च पृथिव्यादीन्गत्यागतीचजानाति अपरपुनरन्येषां तीर्थंकरव्यतिरिक्तानामतिशयज्ञानिनामन्तिकेजानातित्तु तत्सूत्रावयवेनदर्शयति तद्यथापूर्वस्यादिशिआगतोऽहमस्मि एवंदक्षिणस्या:पश्चिमयोत्तरस्या ऊर्द्धदिशोधोदिशोन्यतरस्यवादिशोनुदिशोवागतोऽहमस्मि इत्येवमेकेषांविशिष्टक्षयोपशमादिमतां तीर्थंकरान्यातिशयज्ञानवोधितानांच ज्ञातंभवतितथाप्रतिविशिष्टदिगागमनपरिज्ञानानन्तरं एतेषांतदपिज्ञानंभवतियथास्तिमेस्यशरीरकस्याधिष्टाताज्ञानदर्शनोपयोगलक्षण उपपादकोभवांतरसंक्रमतिभाग् असर्वगतोभोक्तामूर्त्तिरहितोविनासी शरीरमात्रव्यापीत्यादिगुणवानात्मेतितथास्तिचममात्मायोमुष्यादिशोनुदिशश्चसकाशादनुसंचरतिगतिप्रायोग्यकर्मोपादानादनुपश्चात्संचरतिअनुसंचरतिदिग्विदिगागमनंभावदिगागमनंवास्मरन्तीत्यर्थ:सांप्रतंसूत्रावयवेनपूर्वसूत्रोक्तमेवार्थमुपसंहरति सर्वस्यादिश:सर्वस्याश्चानुदिशोयआगतोऽनुसंचरतीतिसोहमित्यात्मोल्लेखोहंप्रत्ययग्राह्यत्वादात्मन:अनेनचपूर्वाद्य:प्रज्ञापकदिश:सर्वागृहीताभावदिशश्चेतिसचसम्मत्यादिपरिज्ञानेसुखप्रतिपत्यर्थंत्वयोदृष्टांतांप्रदर्श्यंतेतद्यथावसन्तपुरेनगरेजितशत्रूराजाधारिणीमहादेवीतयोर्द्धर्मरुच्यभिधान: सुत:सचराजान्यदातापसत्वेन प्रव्रजितुमिच्छुर्धर्मरुचिंराज्येस्थापयितुमुद्यतोधर्मरुचिनामतोदृष्टा किमितिततोराज्यंत्यजति तयोक्तंकिमनयाचपलयानरकादिसकलदुक्खहेतुभूतया स्वर्गापवर्गमार्गार्गलयापरमार्थतइहलोकेप्यभिमानमात्रफलया अतोविहायैनांसकलसुखसाधकंधर्मंकर्तुमुज्जच्छते धर्मरुचिस्तदाकर्ण्योक्तवान् यद्येवंकिमेहंतातस्यानिष्टायेनैवंभूतां सकलदोषाश्रयणीयामयिनियोजयति सकलकल्याणहेतोधर्मान् प्राच्यावयतिइत्यभिधायपितासुताम्नतत:सहतापसाश्रममगात् तत्रचसकलांतापसक्रियां यथोक्तांपालयन्नास्ते अन्यदाचामावास्याया: पूर्वाह्णे एकेनतापसेनोक्तंयथाभोस्तापसाकल्ये अनाकुट्टिर्भविता तदद्यैवकुशकुसुमसमित् कंदमूलफलाद्याहरणं कुरुतइत्येतच्चधर्मरुचिनाजनक: पृष्टस्तातकेयमनाकुट्टिनामतेनोक्तंपुत्रलतादीनामच्छेदनं तच्चामावस्यादिकेविशिष्टेपर्वदिवसेनवर्त्तते सावद्यत्वात्च्छेदनादिक्रियाया: श्रुत्वाचैतदसावचिन्तयत् यदिपुनसर्वथानाकुट्टिस्यात्तदाशोभनंभवेत् एवमध्यवसायिनस्तस्यामावास्यायां तपोवनासन्नपथेनगच्छतां साधूनांदर्शनमभूत्तेनचाभिहिताकिमद्यभवतामनाकुट्टिर्नजाता येनाटवींप्रस्थितास्तैरभिहितं यथास्माकंयावज्जीवमनाकुट्टिरित्याभिधायातिक्रांतासाधवस्तस्यचतदाकर्ण्य ईहापोहविमर्शेन जातिस्मरणमुत्पन्नं यथाहं जन्मान्तरेप्रव्रज्यांकृत्वादेवलोकेसुखमनुभूय इहागतइत्येवंतेनविशिष्टदिगागमनंस्वमत्याजातिस्मरणरूपयाविज्ञातं प्रत्येकबुद्धश्चजातएवंवलकलचीरिश्रेयांसप्रभृतयोत्रयोज्याइति परव्याकरणेत्विदाहरणंगौतमस्वामिनाभगवन्पृष्ट: किमितिमेकेवलज्ञानंनोत्पद्यतेभगवताव्याहृतंभोगौतमभवतोतीवममोपरिस्नेहोस्तितद्गतान्तेनोक्तंभगवन्नेवमेतत्किंनिमित्त: पुनरसौममभगवदुपरिस्नेहस्ततोभगवतातस्यबहुषु भवांरेषुपूर्वसंबंधसमावेदित:चिरसंश्लिष्टोसिमेगोयमाचिरपरिचओसिमेगोयमा इत्येवमादितत्तीर्थकृत् प्रतिपादितमाकर्ण्य गौतमस्वामिनो विशिष्टदिगागमनादिविज्ञानमभूदिति अन्यश्रवणेत्विदमुदाहरणं श्रीमल्लिस्वामिनापण्णांराजपुत्राणांषण्णां उद्वाहार्थमागतानांअवधि ज्ञानेनतत्प्रतिबोधार्थंयथाजन्मांतरे सहितैरेवप्रव्रज्याकृता यथाचतत्फलंदेवलोकेजयंताभिधाने विमानेऽनुभूतं तथाख्यातंतच्चाकर्ण्य लघुकर्मत्वात्प्रतिबुद्धाविशिष्टदिगागमनविज्ञानत्वंसंजातं सांप्रतंप्रकृतमनुस्रियते योऽहिसोहमित्यनेनात्मोल्लेखनपूर्वादिश आगतमात्मान मविच्छिन्नसंततिपतितंद्रव्यार्थतयानित्यंपर्यार्थतया अनित्यंजानाति सपरमार्थतयात्मवादीतिसूत्रकृद्दर्शयतिसे आयावादीलोगावादीकम्मावादी किरियावादीअ

शीलंगाचार्यकृतटीका

नेनतुप्रज्ञापकदिगुपात्तेति यथाकश्चिन्मदिरामदघूर्णितलोललोचनो अव्यक्तमनोविज्ञानो रथ्यामार्गनिपतितस्तच्छ्वसंकटश्वगणापलिह्यमानवदनो गृहमानीतो मदात्ययेन जानातिकुतोहमागतइति तथाप्रकृतो मनुष्यादिरपीतिगाथार्थ: न केवलमेषैव संज्ञानास्यपरापि नास्तीतिसूत्रकृदाह अत्थिमे आयाउववाइए नत्थिमे आयाउववाइएके ,अहं आसीकेवाइओचुए इहपेच्चामविस्सा

मित्ति अस्तिविद्यतेममेत्यनेनपश्च ते न शारीरंनिर्दिशति ममास्यशरीरकस्याधिष्ठातातततिगच्छति सततगतिप्रवृत्त आत्माजीवोस्ती
ति किंभूत औपपातिकः उपपातप्रादुर्भावो जन्मांतरसंक्रांतिः उपपातेभव औपपातिका इत्यनेन संसारिणः स्वरूपं दर्शयति सए
वंभूत आत्माममास्ति नास्तीति चैवंभूतासंज्ञा केषांचिद्ज्ञानावष्टब्धचेतसां न जायतइति तथाकोहंनारक तिर्यग्मनुष्यादि पूर्वजन्म
न्यासंज्ञोवादेवादिरितो मनुष्यादेर्जन्मनच्युतो विनष्टइहसंसारेप्रेत्यजन्मांतरेभविष्यत्येतृपश्चा मीत्ये षांचसंज्ञानभ्वतीतिइहचयद्यपि
सर्वत्रभावदिशाधिकारः प्रज्ञापकदिशाचतथापि पूर्वसूत्रेसाक्षात्प्रज्ञापकादि गुणात्तात्तुभावदिगित्यवगंतव्यं ननुचात्मसंसारिणांदि
श्विदिगागमनादि जाविशिष्टासंज्ञानिषिध्यतेन सामान्यसंज्ञ त्येतन्नसंज्ञिनि धर्मिण्यात्मनिसिद्धे सतिभवति सतिधर्मिणि धर्माश्चिंत्यं
तइतिवचनात् सचप्रत्यक्षादिप्रमाणगोचरातीतत्वाद्दुरुपपादत्वयाहिना सावध्यंचेणार्वसाक्षात्कारिणाविषयीक्रियते तस्मातींद्रियत्वा
दतींद्रियत्वंच स्वभावविप्रकृष्टत्वादतींद्रियत्वादेवचतदव्यभिचारिकार्यादि लिंगसंबंधग्रहणासंभवान्नाप्य नुमानेनतस्याप्रत्यक्षत्वेतत्सामा
न्यग्रहणयत्नत्वनुपपत्तेर्नाप्युपमानेन आगमस्यापिविवक्षायांप्रतिपाद्यमानाया मनुमानान्तर्भावादन्यत्वचवाक्ये संबंधाभावादप्रमाणत्वं
प्रमाणत्वेवापरसोरविरोधित्वान्नाप्यागमनं नमंतरेणापिसकलार्थोपपत्ते र्नाप्यर्थापत्त्या तदेवंप्रमाणपंचकातीतत्वात्षष्टप्रमाणविषयत्वा
दभावएवात्मन प्रयोगश्चायं नास्त्यात्माप्रमाण पञ्चकविषयातीत त्वात्खरविषाणवदिति तदभावेचविशिष्टसंज्ञाप्रतिषेधासंभवेनानुत्थानमे
वसूत्रस्येति एतत्सर्वमनुपासित गुरोर्वचस्तथाहि प्रत्यक्षएवात्मातद्गुणस्य ज्ञानस्यस्वसंविदितत्वात्स्वत्वं विन्निटाद्रियविषयव्यवस्थितयो
घटपटादीनामपिरूपादिगुणप्रत्यक्षत्वादेवाध्यक्षत्वमिति स्मरणाभाव प्रसंगाच्चानुभूतगुणार्थ तन्नमाशंकनीयं तेषांसदासन्निधानसंभ
वादितिहेयोपादेयपरिहारोपादन प्रवृत्तेश्चानुमानेनपरात्मनि सिद्धिर्भवतीति एवमनयैवदिशोपमानादिकमपिस्वधियायथासंभवमा
योज्यंकेवलंमनोनींद्रियोपाणेनैवागमेन विशिष्टसंज्ञानिषेधद्वारेणाऽभिति चात्मोहपनात्मसद्भाव प्रतिपादितःशेषागमानांवानाप्तप्रणीत
त्वादप्रमाणमेवेतिअतचास्त्यात्मेत्यनेन क्रियावादिनः। सप्रभेदानास्तीत्यनेनचाक्रियावादिनएतदंतपातित्वाज्ञानिकवैनयिकाश्च स
प्रभेदाउपक्षिप्तास्तेचामी असियसतंकिरियाणं अक्किरियवा ईणहोइचुलसीई अन्नाणियसत्तट्ठीवेणेतियाणंचवत्तीसातत्रजीवाजीवा
श्रवबन्धपुण्यपाप संवरनिर्जरामोक्षाख्यानवपदार्थाः। स्वपरभेदाभ्यांनित्यानित्यविकल्पद्वयेनचकालनियति स्वभावेश्वरात्मान्मन्वणाद
शीत्युत्तरभेदशतभवति क्रियावादिनामितिचास्तित्ववादिनोभि धीयं तेइयमत्रभावना अस्तिजीवस्वतःनित्यःकालत ।१। अस्तिजीवस्वतः
अनित्यःकालतः ।२। अस्तिजीवपरतोनित्यःकालतः। अस्तिजीवःपरतोअनित्यःकालतःइत्येवंनित्ये नकालेनचत्वारोभेदालब्धाःएवंनि
यतिस्वभावेश्वरात्मभिरप्ये कैकेनचत्वारश्चत्वारो विकल्पालभ्यंते एतेचपंचचतुष्ककाविंशतिर्भवतिइयंचजीवपदार्थेनलब्धाःएवमजीवा
दयोप्यष्टौप्रत्येकंविंशतिभेदाश्चतश्चनवविंशतय शतमशीत्युत्तरंभवति१८०तत्रस्वतइति स्वेनैवरूपेणजीवोस्तिनपरोपाध्यपेक्षयाह्रस्वत्व
दीर्घत्वेइवनित्यःशाश्वतोनक्षणिक पूर्वोत्तरकालयोरवस्थितत्वात्कालतइतिकाल एवविश्वस्यस्थित्युत्पत्ति प्रलयकारणंउक्तं चकालंपच
तिभूतानिकालःसंहरतेप्रजाः कालःसुप्तेषुजागर्त्ति कालोहि दुरतिक्रमःसचातींद्रियो युगपच्चिरक्षिप्रक्रियाभिव्यंग्योहिमोष्णवर्षाव्यव
स्थाहेतुःक्षणलवमुहूर्त्तयामाहोरात्रपक्षमासर्तुअयन संवत्सरयुगकल्पपल्योपम सागरोपमोत्सर्पिण्यवसर्पिणी पुद्गलपरावर्त्तातीता
नागतवर्त्तमानसर्वाद्धादिव्यवहाररूप द्वितीयविकल्पेतुकालादेवात्मनोस्तित्वमभ्युपेयंकिंत्वनित्योसावितिविशेषोयं पूर्वविकल्पात्तृतीय
विकल्पेतुपरत एवास्तित्वमभ्युपगम्यते कथंपुनःपरतोस्तित्वमात्मनोभ्युपेयतेननत्वेतत्प्रसिद्धमेव सर्वपदार्थानांपरपदार्थस्वरूपापेक्षया
स्वरूपपरिच्छेदोयथा दीर्घत्वापेक्षयाह्रस्वपरिच्छेदो ह्रस्वत्वापेक्षयाचदीर्घत्वस्येत्येवमेववानात्मानंसंभक्तुं आदिनमोक्षात्तइयतिरिक्ते व
स्त्वात्मानंबुद्धिःप्रवर्त्ततइति अतोयदात्मनःस्वरूपंतत्परतएवावधार्यं तेनस्वतइति चतुर्थविकल्पोपिप्राग्वदितिचत्वारोविकल्पाःतथान्ये
नियतिरेवात्मनः स्वरूपमवधारयंतिका पुनरियंनियतिरित्युच्यते पदार्थानामवश्यं तयायद्भयाभवने प्रयोजककर्त्तानियतिरुक्तं चप्राप्त
व्योनियतिबलाश्रयेणयोर्थः सावश्यंभवतिनृणांशुभोवाभूतानां महतिकृतेपिहि प्रयत्नेनाभाव्यंभवतिनभाविनोस्तिनाशइ यंचमस्करिप

क्षायोपशमिक: दर्शनसप्तकक्षयात् क्षायिक:चारित्र मोहनीयोपशमादौपशमिक: भव्यत्वात्पारिणामिकइति उक्तोजीवभवगुण: सांप्रत
मजीवभावगुण: सचौदयिक परिणामिकयोरेव संभवति नान्येषां तत्रौदयिकस्तावदुदये भवश्चौदयिक: सचाजीवाश्रयो अनयाविवक्ष
याय इतकाश्चित् प्रकृतय: पुद्गलविपाकिन्यएवभवन्ति का:पुनस्ताउच्यन्ते औदारिकादीनि शरीराणि पञ्चषट्संस्थानानि त्रीण्यङ्गोपां
गानि षट्संहननानि वर्णपञ्चकंगन्ध द्वयंपञ्चरसाअष्टौस्पर्शा अगुरुलघुनाम उपघातनामपराघातनाम उद्योतनाम आतपनाम नि
र्म्माणनाम प्रत्येकंनाम साधारणनाम स्थिरनाम अस्थिरनाम शुभनाम अशुभनाम एता:सर्वाअपिपुद्गलविपाकिना सत्यपिजीवसंबं
धित्वे पुद्गलविपाकित्वादासामिति पारिणामिको जीवगुणस्तुद्वेधानादि पारिणामिक: सादिपारिणामिकश्चेति तत्रानादि पारिणामि
कोधर्म्माधर्म्म काशानां गतिस्थित्यवगाहलक्षण: सादिपारिणामिकस्त्वभ्रेन्द्रधनुरादीनां परमाणनाञ्चवर्णादिगुणान्तरापत्तिरिति
गाथा तात्पर्यार्थे उक्तोगुणोमूलनिक्षेपार्थमाह मूलेवक्कङ्गाहा मूलस्यपोढा निक्षेपोनामस्थापना द्रव्यक्षेत्रकालभावभेदात् नामस्थापने
गतार्थे द्रव्यमूलंज्ञशरीर भव्यशरीरव्यतिरिक्तंत्रिधा औदयिकमूलमुपदेश मूलमादिमूलञ्चेति तत्रौदयिकद्रव्यमूलं वृक्षादीनांमूल
त्वेनपरिणतानि यानिद्रव्याणि उपदेशमूलं यच्चिकित्सको रोगप्रतिघातसमर्थं मूलमुपदिशत्यातुरायेति तच्चपिप्पलीमूलादिकं
आदिमूलंनामयेहृक्षादि मूलोत्पन्नावायंकारणं तद्यतस्थावरनामगोत्र प्रकृतिप्रत्ययान्मूल निर्वर्त्तनोत्तरोत्तर प्रकृतिप्रत्ययाच्चमू
लमुत्पद्यते एतदुक्तंभवति तेषामौदारिकशरीरात्वेनमूलनिर्वर्त्तकानां पुद्गलानामुदयिष्यतांकर्म्मणांशरीरमाद्यं कारणंक्षेत्रमूलंयस्मिन्
क्षेत्रेमूलंउत्पद्यते व्याख्यायतेवा एवंकालमूलमपियावन्तंकालं मूलमास्तेभावमूलन्तु त्रिधेतिगाथार्थ:तथाहि औदयियगाहाभावमूलं
त्रिविधं औदयिकभावमूलं उपदेष्टृमूलं आदिमूलञ्चेति तत्रौदयिकभावमूलं वनस्पतिकायमूलत्वमनुभवन्नामगोत्रकर्म्मोदयात्मूलजीव
एवउपदेष्टृभावं मूलंत्वाचार्यउपदेष्टायै:कर्म्मभि:प्राणिनो मूलत्वेनोत्पद्यन्ते तेषामपिमोक्षसंसारयोर्वायदाविभावमूलं तस्यचोपदोष्टत्यो
तदेवदर्शयति विणयकसायातिउआई तत्रमोक्षस्यादिमूलं ज्ञानदर्शनचारित्रतपश्चौपचारिकरूप: पञ्चधाविनयस्तन्मूलत्वान्मोक्षावाप्ते
स्तथाचाह विणयाणाणं णाणाउदंसणंदंसणाहिचरणन्ति चरणाहिंतोमोक्खो मुक्खेसुक्खंअणाबाहं विनयफलंशुश्रूषाशुश्रूषयो
फलंश्रुतज्ञानं ज्ञानस्यफलं विरतिर्विरतिफलञ्चाश्रवनिरोध:संवरफलंतपोबलमथतपसो निर्ज्जराफलंदृष्टं तस्मात्क्रियानिवृत्ति:क्रियानि
वृत्तेरयोगित्वंयोगनिरोधात्भवसंततिक्षय: संततिक्षयान्मोक्ष:तस्मात्कल्याणानां सर्वेषाभाजनंविनय: इत्यादिसंसारस्यत्वादिमूलंविषय
कषायादइतिमूलमुक्तमिदानींस्थानस्य पञ्चदशधानिक्षेपमाहनामंठवणागाहा तत्रद्रव्यस्थानंज्ञ शरीरभव्यशरीरव्यतिरिक्तं द्रव्याणांस
चित्ताचित्तमिश्राणा स्थानमाश्रय:क्षेत्रस्थानभरतादि ऊर्द्धाधस्तिर्यग्लोकादिचेति यत्रक्षेत्रेस्थानंव्याख्यायते अद्धाकालस्थानंद्विधा
कायस्थितिभवस्थितिभेदात् तत्रकायस्थिति:पृथिव्यप्तेजोवायूनामसंख्येयाउत्सर्पिण्यवसर्पिण्योवनस्पतेस्तुताएवानंताविकालेंद्रियणामसं
ख्येयावर्षसहस्रा:पञ्चेन्द्रियतिर्यग्मनुजाना सप्ताष्टौवाभवस्थितिस्तुवायूदकवनस्पतिपृथिवीनांत्रिसप्तदश द्वाविंशतिवर्षसहस्रात्मिकातेजस
स्त्रीण्यहोरात्राणिद्वीन्द्रियाणां शंखादीनाद्वादशवर्षाणित्रीन्द्रियाणा पिपीलिकानामेकोनपञ्चाशदहोरात्राणि चतुरिंद्रियाणाभ्रमरा
दीनांषण्मासा: पञ्चेंद्रियतिर्यग्मनुष्याणांत्रीणिपल्योपमानि देवानानारकादीणाञ्चकायस्थितेभवाङ्गवस्थिति त्रयस्त्रिंशत्सागरोपमानी
तिइयमुत्कृष्टाद्विरूपादिजघन्यातुसर्वेषामंतर्मुहूर्त्तात्मिकानवरंदेवानारकयोर्दशवर्षसहस्राणीतिअथवाअद्धास्थानंसमयावलिकामुहूर्त्ता
होरात्र पक्षमास र्वयन संवत्सरयुगपल्यापम सागरोपमोत्सर्पिण्यवसर्पिणीपुद्गल परावर्त्तातीतानागतसर्वाद्धारूपमितिऊर्द्धस्थानन्तु
कायोत्सर्गादिकमस्तो पलवणत्वान्निषद्याद्यपिदृश्यते उपरतिर्विरतिस्तत्स्थानं देशसर्वत्रवश्रावकसाधु विषयंवसतिस्थानंयोयत्रग्राम
गृहादौवसति संयमस्थानंसंयम: सामायिकच्छेदो पस्थापनीयपरिहार विशुद्धिसूक्ष्मसंपराये यथाख्यातरूपस्तस्यपञ्चविधस्याप्यसंख्ये
यानि संयमस्थानानि किन्तदसंख्यमितिचेत् अंतीन्द्रियत्वादर्थस्य नसाक्षान्निर्देष्टुंशक्यते आगमानुसारोपमायानूच्यतेपूर्वैकसमयेत्व
नसूक्ष्माग्निजीवाअसंख्येयलोकाकाशप्रदेशप्रमाणाउत्पद्यन्तेतेभ्योग्निकायत्वेनपरिणताअसंख्येयगुणास्ततोप्यनुभागबंधाध्यवसायस्था

नान्यसंख्येयगुणास्ततोप्यनुभागबंधाध्यवसायस्थानान्यसंख्येयगुणानिसंयमस्थानान्यप्येतावंत्येवेतिसामान्यतोविशेषतस्तूच्यतेसामायि
कच्छेदोपस्थापनीयपरिहारविशुद्धीनांप्रत्येकमसंख्येयलोकाकाशतुल्यानिसंयमस्थानानिसूक्ष्मसंपरायस्यांतर्मुहूर्त्तिकत्वादंतर्मुहूर्त्तस
मयतुल्यान्यसंख्येयानिसंयमस्थानानियथाख्यातस्यत्वेकमेवाजघन्योत्कृष्टसंयमस्थानं अथवासंयमश्रेण्यन्तर्गतानिसंयमस्थानानिशास्त्रा
णिसाचानेनक्रमेणभवतितद्यथानंतचारित्रपर्यायनिष्पादितमेकंसंयमस्थानमसंख्येयसंयमस्थाननिर्वर्त्तितंकण्डकन्तैश्चासंख्येयैर्जनितंष
ट्स्थानकंतदसंख्येयात्मिकाश्रेणीतिप्रग्रहस्थानन्तुप्रकर्षेणगृह्यतइत्युपादेयवाक्योनायकइत्यर्थः सचलौकिकोत्तरश्चतस्यस्थानं
प्रग्रहस्थानंलौकिकंतावत्पञ्चविधंतद्यथाराजायुवराजोमहत्तरःअमात्यःकुमारश्चेतिलोकोत्तरमपिपञ्चविधंतद्यथाआचार्योपाध्यायप्रवर्त्ति
स्थविरगणावच्छेदिभेदात्द्वियोधस्थानं पञ्चधातद्यथालीढप्रत्यालीढ वैशाखमण्डलसमपादभेदात् अचलस्थानन्तुचतुर्द्धा सादिसपर्यवसा
नभेदात्तद्यथा सादिसपर्यवसानं परमाण्वादेर्द्रव्यस्यैक प्रदेशादाववस्थानं जघन्यतएकंसमयं उत्कृष्टतश्चासंख्येयकालमिति साद्यपर्यव
सानांसिद्धानां भविष्यदद्धारूपं अनादिसपर्यवसानमतीताद्धा रूपस्यशैलेश्यवस्थांत्य समयेकर्म्मणा तैजसशरीरभव्यत्वानांश्चेति अनाद्य
पर्यवसानं धर्म्माधर्म्माकाशानामिति गणनात्स्थानमेकद्व्यादिकं शीर्षप्रहेलिकापर्यंतं सन्धानस्थानंद्विधा द्रव्यतोभावतश्च पुनरप्येकैकं
द्विधा छिन्नाछिन्नभेदात्तत्र द्रव्यच्छिन्नसन्धानं कंचुकादेरच्छिन्नसन्धानन्तु पच्यमोत्पद्यमानतंत्वादेरिति भावसन्धानमपि प्रशस्ताप्रशस्त
भेदात् द्वेधातत्रप्रशस्ता छिन्नभावसन्धानं उपशमकक्षपकश्रेणिमारोहतोजंतोरपूर्वसंयमस्थानान्यच्छिन्नान्येवभवतिश्रेणिव्यतिरेकेणवा
प्रवर्द्धमानकण्डकस्येति छिन्नप्रशस्तभावसंधानं पुनरौपशमिकादि भावादौदयिकादि भावांतरगतस्य पुनरपिशुद्धपरिणामवतः तत्रैव
गमनं अप्रशस्ताच्छिन्नभाव सन्धानमुपशमश्रेण्यो प्रतिपततोऽविशुद्ध्यमान परिणामस्यानंतानुबंधि मिथ्यात्वोदयंयावत् उपशमश्रेणि
मंतरेणापि कषायवशावन्ध्याध्यवसाय स्थानान्युत्तरोत्तराण्येव गाहमानस्यवाइति अप्रशस्तच्छिन्नसन्धानं पुनरौदयिकभावादौपशमि
कादि भवांतरसंक्रांतौसत्यां पुनस्तत्रैवगमनमितिइहद्वारद्वयंयौगपद्येनव्याख्यानंतत्रसन्धानस्थानंद्रव्यविषयमितरन्तुभावविषयमित्युक्तं
स्थानं अथवाभावस्थानं कषायाणां यत्स्थान मिहपरिगृह्यते तेषामेव जेतद्रव्यत्वेनाधिकृतत्वात्तेषां किंस्थानंयदाश्रित्यच तेभवंति
शब्दादिविषयानाश्रित्यच तेभवंतीतितद्दर्शयति पञ्चसुगाहातत्रेच्छानङ्गरूपः कामस्तस्यगुणायानाश्रित्य चासौचेतसोविकारमादर्शयति
तेचशब्दस्पर्शरसे रूपगन्धास्तेषु पञ्चस्वपिव्यस्तेषु समस्तेषुवाविषयभूतेषु यस्यजंतोर्विषयसुखपिपासोन्मुखस्या परमार्थदर्शिनः संसाराभिष्व
ङ्गिणो रागद्वेषतिमिरोपप्लुतमनोज्ञेतरविषयोपलब्धौ सत्यांकषायावर्त्तंते प्रादुर्भवंति तन्मूलश्चसंसारपादपः प्रादुर्भवतीत्यतः शब्दा
दिविषयोद्भूतकषायाः संसारेसंसारविषयं मूलस्थानमेवेति एतदुक्तंभवति रागाद्युपहतचेताः परमार्थमजानानो ततस्वभावेपि तत्
स्वभावारोपणेनांधादप्यन्धतमः कामीमोदतेततश्चाह दृश्यंवस्तुपरंनपश्यति जगत्यन्धःपुरोवस्थितंरागांधस्तु यदस्तितत्परिहरन्यन्नास्ति
तत्पश्यतिकुंदेंदीवरपूर्णचंद्रकलशश्रीमल्लतापल्लवानारोप्या शुचिराशिषु प्रियतमागात्रेषुयन्मोदतेद्वेषंवा कर्कशशब्दादौजनतीतितन्न
मनोज्ञेतरशब्दादिविषयाः कषायानाम्मूलस्थानं तेचसंसारस्येति गाथातात्पर्यार्थः यदिनामशब्दादिविषयाः कषायाःकथंतेभ्यः संसार
इत्युच्यतेयतःकर्मस्थितेः कषायाम्मूलं सोपिसंसारस्यसंसारिणश्चावश्यं भाविनः कषायादृत्येतदेवाह जहसव्वपावयाणंगाहा यथासर्वपा
दपानांभूमौ प्रतिस्थितानिमूलान्येवं कर्मपादपानां संसारेकषायरूपाणि मूलानिप्रतिष्ठितानीति गाथार्थः ननुचकथमेतच्छद्दैयंकर्म
णःकषायाम्मूलमित्युच्यते यतोमिथ्यात्वाविरति प्रमादकषाययोगाबंधहेतवः तथाचागमः जीवेणंभंतेकतिहिंठाणेहिंणाणावरणिज्जं
कम्मंबन्धइगोयमादोहिंठाणेहिंतं जहारागेणवदोसेणवरागेदुविहेमायालोभेयदोसेदुविहेकोहेयमाणेयएएहिंचउहिं ट्ठाणेहिंवीरिउव
गूहिएहिंणाणावरणिज्जं कम्मंबन्धइएवमटानामपि कर्म्मणांयोज्जमिति तेचकषायामोहनीयांतः पातिनोष्टप्रकारस्य कर्म्मणःकार
णंमोहनीयं कामगुणानाञ्चदर्शयति अट्ठविहकम्मरुक्खा गाहायदवादिशाक् इमकम्मपायवाणं तत्रकतिप्रकाराः तेकर्म्मपादपाः किं
कारणाश्चेत्युच्यते अष्टविधकर्म्मवृक्षास्तेसर्वेपि मोहनीयमूला नकेवलंकषायाः कामगुणाश्चपिमोहनीयमूला यस्माद्वेदोदयात्कामा

वेदश्चमोहनीयांतपातीत्यतस्तन्मोहनीयमूलमाद्यंकारणंयस्यसंसारस्यसतथाइतिगाथार्थ:तदेवंपारंपर्येण संसारकषायकामानाकारण
त्वान्मोहनीयंप्रधानभावमनुभवतितत्त्वयेवावश्यम्भावीकर्म्म चयस्तथाचाराणिजहमत्ययसूद्दे एहयाएनालोतहाकम्माणिहंम्मन्तिमोह
णिज्जे खयंगएतच्चद्विधादर्शनचारित्रमोहनीयभेदातदेवाहदुविहोयहोइमोहोगाहामोहनीयंकर्मद्वेधाभवतिदर्शनमोहनीयंचारित्रमो
हनीयञ्च वन्धहेतोर्द्वैविध्यात्तथाहि अर्हन्सिद्धचेत्यतपः श्रुतगुरुसाधुसंघ प्रत्यनीकतयादर्शनमोहनीयं कर्म्मबध्नातियेनचासाव
नंतसंसारसमुद्रांतःपात्येवावतिष्टते तथातीव्रकषाय वहुरागद्वेषमोहाभिभूत:सन् देशसर्वविरत्युपघाति चारित्रमोहनीयं कर्म्मब
ध्नातितत्रमिथ्यात्वसम्यगमिथ्यात्वसम्यक्तभेदा त्रेधादर्शनमोहनीयंया तथाषोडशकषायाणां स्थानमवप्रकृतं तच्चशब्दादिक पञ्चगुणा
त्मकमितिगाथार्थः तत्रचारित्रमोहनीयोत्तरप्रकृति स्त्रीपुंनपुंसकवेद हास्यरतिलोभाश्रुत कामाश्रयिणः कषाया:संसारमूलस्यच
कर्म्मणः प्रधानंकारणमिति प्रविकटयिपुराह संसारस्सउमूलंइत्यादि संसारस्यनारक तिर्यग्नरामरगति संस्तृतिरूपस्य कारणमष्टप्र
कारंकर्म्म तस्यापिकर्म्मणः कषाय:क्रोधादयो निमित्तंभवन्ति तेषाञ्चप्रतिपादित शब्दादिस्थानानां प्रचुरस्थानत्वप्रतिपादनाय पुनर
पिस्थानविशेषं गाथाशकलेनाह तेसयणेत्यादिस्वजन: पूर्वापरसंस्तुतो मातापितृश्वसुरादिकः प्रेष्योभृत्यादिरर्थो धनधान्यकुप्यवास्तु
रत्नभेदरूपः तेस्वजनादयः स्ततद्दंद्वाआदिर्येषां मित्रादीनांतिषुस्थिता: कषायाविषयरूप तथाध्यात्मनिविषयरूपतया प्रसन्नचंद्रेकिंद्रि
यादीनामितिगाथार्थः तदेवंकषायस्थान प्रदर्शनेन सूत्रपादापात्तंस्थानं परिसमाप्या तेषामेवकषायाणां सूत्रमूलपादापात्तानां
जेतत्पत्वाधिकृतानां निक्षेपमाह नामंठवणागाहा यथाभूतार्थनिरपेक्षमभिधानमात्रंनाम सद्भावासद्भावरूपा प्रतिकृति:स्थापनाकृत
भिमकङ्कुद्ग्त्कटललाटघटित त्रिशूलरक्तास्यनयन संदष्टाधरस्पंदमानस्वेदसलिलचित्र पुद्याच्चवराटकादिगतेति द्रव्यकषायाञ्च शरीर
भव्यशरीराभ्यां व्यतिरिक्ताः कर्म्मद्रव्यकषायानां कर्म्मद्रव्यकषायानो कर्म्मद्रव्यकषायाश्चेति तत्रादिस्थितात्वानुदीर्णोदीर्णाः पुद्गला
द्रव्यप्राधान्यात्कर्म्म द्रव्यकषायानो कर्म्मद्रव्यकषायास्तु विभीषतीतकादय उत्पत्तिकषाया:शरीरोपधिक्षेत्रवास्तुस्थाणवादयोतदाश्रित्य
तेषामुत्पत्तिस्तथाचोक्तं किंपत्तोकट्ठयरंजं मूढोघाणुअम्मिआवडिओ घाणुस्सतस्सरूसइन अप्पणोदुप्पओगस्स प्रत्यय:कषायाः कषाया
णांयेप्रत्यया यानिवन्धकारणानि तेचेहमनोज्ञेतरभेदाः शब्दादयोअतएवोत्पत्ति प्रत्यययो:कार्यकारणगतोभेदः आदेशकषाया:कृत्रि
मकृतत्रकुटीभङ्गादयः रसतोरसकषायः कटुतिक्तकषायपञ्चकांतर्गतः भावकषाया:क्रोधमान मायालोभास्तेचैकैकशो अनंतानुवंधप्रत्या
ख्यानावरणसंज्वलनभेदेनभिद्यमाना:षोडशविधाभवंतितेषांचस्वरूपानुवन्धफलानि गाथाभिरभिधीयन्तेताश्चेमाजलरेणु पुढविपव्वय
राइ सरिसोचउव्विहोकोहो तिणिसलयाकट्ठट्ठिय सेलत्थंभोवमोमाणो मायावलेहिगोमुत्तिमेंढ सिंगघणवंसमूल ससमालोभो
हलिद्दकद्दमखंजण किमिरायसामाणो पक्खचउमासवच्छर जावज्जीवाणुगामिणोकमसो देवणरतिरियाणारयगइ साहणहेयवो
भणिया एषांचनमोद्यष्टविध कषायनिक्षेपाणा कतमोनयः कमिच्छतीत्येवदभिधीयते तत्रनैगमस्य सामान्यविशेषरूपत्वानैकगमत्वा
च्चतदभिप्रायेण सर्वेपिसाधवोनामादयः संग्रहव्यवहारौतु कषायसम्बन्धाभावादेश समुत्पत्तीनेच्छतः ऋजुसूत्रत्वास्तु वर्त्तमानार्थनिष्ट
त्वादादेशसमुत्पत्ति स्थापनानेच्छति शब्दस्तुनाम्नोपि कथंचिद्भावांतर्भावान्नाम भावाविच्छतीति गाथातात्पर्यार्थः तदेवंकषाया:कर्म्म
कारणत्वेनोक्तास्तदपि संसारस्यसचकतिविधइतिदर्शयति दव्वेखेत्ते गाहाद्रव्यसंसारोव्यतिरिक्तोद्रव्यसंस्तृतिरूप:क्षेत्रसंसारोयेपुक्षेत्रेषु
द्रव्याणिसंसरतिकालसंसार:यस्मिन्कालइतिनारकतिर्यग्नरामरगतिचतुर्विधानुपूर्व्युदयाद्भवांतरसंक्रमणंभवसंसारस्तुसंस्तृतिव्यस्वभा
वऔदयिकादिभावपरिणतिरूपस्तत्रचप्रकृतिस्थित्यनुभागप्रदेशवन्धानाप्रदेशविपाकानुभवनं एवंद्रव्यादिक:पञ्चविधः संसारोयवाद्रव्या
दिकश्चतुर्थासंसारस्तद्यथाअश्वाद्धस्तिनंग्रामान्नगरंवसंताद्ग्रीष्मंऔदयिकादौपशमिकमिति गाथार्थ:तस्मिंश्चसंसारेकर्म्मवशगा:प्राणि
न:संसरंतीत्यत:कर्म्म निदर्शनार्थमाहणामंठवणागाहाकितिकम्मगाहानामकर्म्म कर्म्मार्थशून्यमभिधानमात्रंस्थापनाकर्म्म पुस्तकपत्रादौ
कर्मवर्गणानांसद्भावासद्भावरूपास्थापनाद्रव्यकर्मव्यतिरिक्तंद्विधाद्रव्यकर्मनोद्रव्यकर्मचतत्रद्रव्यकर्म्म कर्म्मवर्गणात:पातिन:पुद्गला:वन्धयो

ग्याबध्यमानाबद्धाश्चायुर्वादीर्णाइति नोद्रव्यकर्म्म रूपी वस्त्रादिकर्म्म अथकर्म्म वर्गणांतःपातिनः पुद्गलाद्रव्यकर्म्म त्ववाचिका पुनस्मार
र्गणाइति संकीर्त्तते इहवर्गणाःसामान्येन चतुर्विधा द्रव्यक्षेत्रकालभावभेदात् तत्रद्रव्यतएकद्व्यादिसंख्येया संख्येयानंत प्रदेशिकाः
ततोवगाढद्रव्यैकद्व्यादि संख्येयासंख्येय प्रदेशात्मिकाः कालतएकद्व्यादिसंख्येयासंख्येय समयस्थितिकाभावतो रूपरसगन्धस्पर्श
स्थगतभेदात्मिकाः सामान्यतोविशेषतस्तूच्यन्ते तत्रपरमाणूनामेकावर्गणा एवमेकैकपरमाणूपचयात्संख्येय प्रदेशिकानां स्कन्धानामसं
ख्येयाअसंख्येय प्रदेशिकानां असंख्येयाएताश्चौदारिकादि परिणामाग्राह्यत्वे अनंतप्रदेशिकानामप्यनंता अग्रहणायोगास्ता उल्लं
घ्यऔदारिकग्रहणयोग्यास्त्वनंतानं तप्रदेशिकास्त्वनंताएवभवंति तत्रायोग्योत्कृष्टवर्गणाया रूपेप्रक्षिप्ते औदारिकग्रहणयोग्यास्त्वनंत
प्रदेशिकास्त्वनंताएवभवंति तत्रायोग्योत्कृष्टवर्गणाया रूपेप्रक्षिप्ते औदारिकशरीरग्रहणयोग्या जघन्यावर्गणाभवंति पुनरेकैकप्रदे
शवृद्ध्याप्रवर्द्धमाना औदारिकयोग्योत्कृष्टवर्गणाया यदनंताभवंत्यथ जघन्योत्कृष्टयोः कोविशेषोजघन्यत उत्कृष्टाविशेषाधिका विशेष
स्तस्याएवौदारिक जघन्यवर्गणाया अनंतभागस्तस्य चानंतपरमाणुमयत्वादेकैकोत्तरप्रदेशोपचयेसत्यप्यौदारिकयोग्य वर्गणानांज
घन्योत्कृष्ट मध्यवर्त्तिनीनामानंत्यन्त तस्मादौदारिकायोग्योत्कृष्ट वर्गणायां रूपप्रक्षेपेणायोग्य वर्गणानां जघन्योत्कृष्ट मध्यवर्त्तिनीना
मानंत्यन्तश्चौदारिका योग्योत्कृष्टवर्गणायां रूपप्रक्षेपेणायोग्यवर्गणा जघन्याभवति एताअप्येकैकप्रदेश वृद्ध्योत्कृष्टांतांयावनंताभवंति
जघन्योत्कृष्ट वर्गणानांको विशेषोजघन्याभ्यो असंख्येयगुणास्ताश्च बहुप्रदेशत्वादतिसूक्ष्म परिणामत्वाच्चौदारिकस्यानंता एवा
ग्रहणयोग्य भवंत्यल्पप्रदेशत्वाद्बादर परिणामत्वाच्चवैक्रियस्यापीति अत्रच यथाप्रदेशोपचयस्तथा विस्रसापरिणामवशाद्वर्गणानांसूक्ष्म
तरत्वमवसेयं एतदेवोत्कृष्टोपरिरूप प्रक्षेपयोग्यायोग्यादिकं वैक्रियशरीरवर्गणानां जघन्योत्कृष्टविशेष लक्षणंचावसेयं तथावैक्रियाहा
रकांतरालवर्त्त्यायोग्य वर्गणानां जघन्योत्कृष्टविशेषासंख्येय गुणात्वमिति पुनरप्ययोग्यवर्गणो परिरूपप्रक्षेपात्जघन्याहारकशरीर
योग्यवर्गणाभवति ताश्चप्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टांयावदनन्ताभवति अथजघन्योत्कृष्टयोः कियदंतरमित्युच्यते जघन्याभ्यउत्कृष्टा
विशेषाधिकाः कोविशेषइतिचेत् जघन्यवर्गणाया एवानंतभागस्तस्याप्यनंत परकाणुदाहारका ग्रहणंचयोग्यवर्गणानां प्रदेशोत्तरवृद्धा
नांआनंत्यमितिभावना तस्यामेवोत्कृष्टवर्गणायां रूपेप्रक्षिप्तेजघन्या आहारकाग्रहणवर्गणा ततःप्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टांयावद
नंताएव आहारकस्य सूक्ष्मत्वाद्बहुप्रदेशत्वाच्चायोग्याएवभवंति बादरत्वादल्पप्रदेशत्वाच्चतैजसस्येति जघन्योत्कृष्टयो कियदन्तरमि
त्युच्यते अजघन्याभ्यउत्कृष्टा अनन्तगुणाः केनगुणाकारेणेतिचेत् अभव्येभ्योनन्तगुणाः सिद्धानामनन्तभागइति तदुपरिरूपेप्रक्षिप्ते
तैजसशरीरवर्गणा जघन्याएताअपि प्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टांयावदनंताभवंति अजघन्योत्कृष्टयोः कियदन्तरंजघन्याभ्यउत्कृष्टा
विशेषाधिकाविशेषस्तु जघन्यवर्गणानंतभागस्तस्यानंतप्रदेशत्वाजघन्योत्कृष्टांतरालवर्गणानामानंत्यं भवति तैजसोत्कृष्टवर्गणोप
रिरूपेप्रक्षिप्ते सत्यग्रहणवर्गणाभवंति एवमेकादिवृद्ध्योत्कृष्टांता अनंतास्ताश्चातिसूक्ष्मत्वाद् बहुप्रदेशत्वाच्चतैजसस्याग्रहणयोग्याबा
दरत्वात्अल्पप्रदेशत्वाच्चभाषाद्रव्यस्यापीति जघन्योत्कृष्टयोरनंतगुणत्वेन विशेषोगुणकारश्चाभव्येभ्योनंतगुणाः सिद्धानामनंतभागइ
तितस्यामयोग्योत्कृष्टवर्गणायां रूपेप्रक्षिप्तेजघन्याभाषाद्रव्यवर्गणाभवति तस्याश्चप्रदेशवृद्ध्या उत्कृष्टवर्गणापर्यंतान्यनंतानिस्थाना
निभवंति जघन्योत्कृष्टयोर्विशेषोजघन्यवर्गणानंतभागाधिकोत्कृष्टवर्गणाभवति अत्राप्यनंतभागस्यानंत परमाण्वात्मकत्वाद्भाषाद्रव्य
योग्यवर्गणानामानंत्यमवसेयं तदनेनैकादिप्रदेशवृद्धिक्रमेणायोग्यवर्गणानां जघन्योत्कृष्टादिकं ज्ञातव्यंनवरंजघन्योत्कृष्टयोर्भेदोयं
अभव्यानन्तगुणः सिद्धानन्तभागात्मकस्तासांच पूर्व्वहेतुकदंबकादेव भाषाद्रव्यानापानद्रव्ययोरयोग्यत्वमवसेयं अयोग्योत्कृष्टवर्गणा
यांरूपेप्रक्षिप्ते आनापानवर्गणाजघन्या ततोरूपोत्तरवृद्ध्योत्कृष्टवर्गणांतां अनन्ताभवन्ति जघन्योत्कृष्टाजघन्यानन्तभागाधिका
तदुपरिरूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदेनाग्रहणवर्गणाविशेष स्त्वभव्येभ्योनन्तगुणाःसिद्धानामनन्तभागः पुनरप्ययोग्योत्कृष्टवर्गणाप
रिप्रदेशादिवृद्ध्याजघन्योत्कृष्टभेदामनोद्रव्यवर्गणाजघन्यवर्गणानन्तभागोविशेषः पुनरपिप्रदेशोत्तरक्रमेणाग्रहणवर्गणाविशेषचाभव्या

नन्तगुणादिकत्वाच्च प्रदेशबहुत्वादतिसूक्ष्मत्वाच्च मनोद्रव्यायोग्या:अल्पप्रदेशत्वाद्बादरत्वाच्च कार्म्मणस्यापि तदुपरिरूपप्रक्षिप्ते जघन्या: कार्म्मणशरीरवर्गणा: पुनरप्येकैकप्रदेशवृद्ध्यावर्द्धमाना उत्कृष्टायावदनन्ताभवन्ति अथजघन्योत्कृष्टयो: क:प्रतिविशेषइत्युच्यतेजघन्य वर्गणानन्तभागाधिकोत्कृष्टवर्गणा: सचानन्तभागानन्तानन्तपरमाण्वात्मको तएवानन्तभेदभिन्ना:कार्म्मद्रव्यवर्गणाएवंभवंति अभिधानप्रयोजनंद्रव्यकार्म्मणोव्याचिख्यासितत्वादितिशेषाअपिवर्गणा:क्रमायाता:विनेयजनानुग्रहार्थं व्युत्पाद्यंतेपुनरप्युत्कृष्टकार्म्मवर्गणोपरिरूपादिप्रक्षेपेण जघन्योत्कृष्टभेदभिन्नाध्रुववर्गजघन्याभ्य: उत्कृष्टा:सर्व्वजीवेभ्योनन्तगुणास्तदुपरिरूपप्रक्षेपादिक्रमेणानन्ताए वंजघन्योत्कृष्टभेदाद्ध्रुववर्गणाअध्रुवत्वादध्रुवा: याश्चिकसद्भावादध्रुवत्वं जघन्योत्कृष्टभेदोनंतरोक्तएवतदुत्कृष्टापरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदाश्चअनंताएवशून्यावर्गणाभवंतिजघन्योत्कृष्टविशेष: पूर्ववत्तायासांसंसारेप्यभावात् शून्यवर्गणाइत्यभिधाएतदुक्तंभवति अध्रुववर्गणोपरिप्रदेशवृद्ध्यानंता अपि नभवंतीति प्रथमाशून्यवर्गणा तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा: प्रत्येकशरीरवर्गणाभवंतिजघन्यात: क्षेत्रपल्योपमासंख्येय भागप्रदेशगुणोत्कृष्टास्तदुपरिरूपोत्तरादि वृद्ध्याजघन्योत्कृष्टभेदाअनंताएवशून्यवर्गणाभवंतिज घन्यवर्गणातउत्कृष्टाल संख्येयभागप्रदेशगुणातदसंख्येयभागोप्यसंख्येय लोकात्मकइति द्वितीयाशून्यवर्गणा तदुपरिरूपादिवृद्ध्याबा दरनिगोदशरीरवर्गणाजघन्यात: क्षेत्रपल्योपमासंख्येयभाग प्रदेशगुणोत्कृष्टा तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा तृतीयाशून्यवर्गणाउत्कृष्टाजघन्यातो संख्येयगुणाकोगुणकारइत्युच्यते अंगुलासंख्येयभागप्रदेशराशेरावलिकाकालासंख्येयभागसमय प्रमाणक्षतपौन:पुण्यवर्गमूलस्यासंख्येय भागप्रदेशप्रमाणाइतितदुपरिरूपोत्तरवृद्ध्याजघन्योत्कृष्टभेदास्तेसूक्ष्मनिगोदशरीरवर्गणाजघन्यातउत्कृष्टाव लिकाकालसंख्येयभागसमयगुणातदुपरि रूपोत्तरवृद्ध्या जघन्योत्कृष्टभेदाचतुर्थी शून्यवर्गणाजघन्यातउत्कृष्टाचतुरस्रीकृतलोकस्या संख्येया: श्रेण्यस्ताश्च प्रतरासंख्येयभागतुल्याइति तदुपरिरूपादिवृद्ध्या जघन्योत्कृष्टभेदा महास्कन्धवर्गणा जघन्यातउत्कृष्टाक्षेत्रप ल्योपमस्यासंख्येयगुणावेति उक्ता:समासतोवर्गणा विशेषार्थिनातुकर्मप्रकृतिरवलोकनीयेति सांप्रतं प्रयोगवीर्यंतरायक्षयोपशमावि र्भूतवीर्येणात्मना प्रकर्षेणयुज्यत इतिप्रयोग: सचमनोवाक्कायलक्षण: पञ्चदशधाकथमित्युच्यते तत्रमनोयोग: सत्यासत्यामिश्रानुभय रूपश्चतुर्द्धैवं वाग्योगोपिकाययोग: सप्तधा औदारिकमिति वैक्रियमिश्राहारकाहारकमिश्रकार्मण योगभेदात्तत्रमनोयोगोमन:प र्याप्तस्यमनुष्यादेर्वाग्योगोपि द्वींद्रियादीनां औदारिकयोगस्तिर्यग्मनुजाया: शरीरपर्याप्तेरूर्द्ध्वं तदारतस्तुमिश्र: केवलिनोवासमुद्घात गतस्यद्वितीयषष्ठसप्तमसमयेषु वैक्रियकाययोगोदेवनारकबादरवायूनां अन्यस्यवावैक्रियलब्धिमतस्तन्मिश्रस्तु देवनारकयोरुत्पत्तिसम येन्यस्यवावैक्रियंनिर्वर्त्तयत: आहारककाययोगोश्चतुर्दशपूर्वविद आहारकशरीरस्थस्य तन्मिश्रस्तु निवर्त्तनाकाले कार्मणयोगोविग्रह गतौ केवलिसमुद्घातेवा तृतीयचतुर्थपंचमसमयेष्विति तदनेन पंचदशविधेनापि योगेनात्माष्टौप्रदेशान् विहायोत्तप्तभोजनोदकवद्दु द्वर्त्तमानै: सर्वैरेवात्मप्रदेशैर्वात्मं प्रदेशावष्टब्धाकाशदेशस्थ कार्मणशरीरयोग्यंकर्मदलिकंबध्नाति तत्प्रयोगकर्मेत्युच्यते उक्तंच जाव णंएसजीवेएयवेयइचलइफंदइत्यादि तावणंअट्ठविहबंधएवा छव्विहबंधएवा सत्तविहबंधएवा एगविहबंधएवा छव्विहबंधएवाएगविह बंधएवा नाणंअबंधएवा समुदानकर्मसंपूर्वादाङ्पूर्वाच्चददातेर्लुडंतात् पृषोदरादिपाठेन आकारास्याकारादेशेनरूपं भवति तत्रप्रयो गकर्मणैकरूपतया गृहीतानां कर्मवर्गणानां सम्यक्मूलोत्तरप्रकृतिस्थित्यनुभावप्रदेशबंधभेदेनाङ्मर्यादयादेश सर्वोपघातिरूपयात यास्पृष्टनिधत्तनिका चितावस्थयायस्वीकरणं समुदायं तदेवकर्मसमुदानकर्म तत्रमूलप्रकृतिबंधो ज्ञानावरणीयादिरुत्तरप्रकृतिबंध स्तूच्यते उत्तरप्रकृतिबंधो ज्ञानावरणीयंपंचधामतिश्रुतावधिमन:पर्यायकेवलावरणभेदात् तत्रकेवलावारकं सर्वघातिशेषाणिदेशसर्व घातीन्यपि दर्शनावरणीयंनवधानिद्रा पंचकदर्शनचतुष्टयभेदात् तत्रनिद्रापंचकं प्राप्तदर्शनलब्ध्युपयोगोपघातकारिदर्शनचतुष्टयंतुदर्श नलब्धिप्राप्तेरेवातापि केवलदर्शनावरणं सर्वघातिशेषाणितुदेशत: वेदनीयंद्विधासातासातभेदात्मोहनीयं द्विधादर्शनचारित्रभेदात् तत्रदर्शनमोहनीयं त्रिधामिथ्यात्वादिभेदात् बंधतस्त्वेकविधं चारित्रमोहनीयं षोडशकषायनवनो कषायभेदात्पंचविंशतिविधंअथवा

पिमिथ्यात्वंसंज्वलनवर्ज्जंद्वादशकषायाश्च सर्व्वघातिन्यः शेषास्तुदेशघातिन्यइति आयुष्कं चतुर्द्धानारकादिभेदात् नामद्विचत्वारिंशद्भेदं गत्यादिभेदात् त्रिनवतिभेदंचोत्तरोत्तरप्रकृतिभेदात् गतिश्चतुर्द्धाजातिरेकेन्द्रियादिभेदात्पंचधा शरीराण्यौदारिकादिभेदात्पंचधा औदारिकवैक्रियाहारकभेदादंगोपांगं त्रिधा निर्म्माणनामसर्व्वजीवशरीरावयवनिष्पादकमेकधा बन्धननामऔदारिककर्म्म वर्गणैकत्वापादकं पञ्चधासंघातनामौदारिकादि कर्म्म वर्गणारचनाविशेषसंस्थापकं पञ्चधासंस्थानानचतुरस्रादिषोढा संहनननामवज्रऋषभनाराचादिषोढैव स्पर्शाष्टधारसः पञ्चगन्धोद्विधावर्णः पञ्चधा:आनुपूर्वीनारकादिचतुर्द्धाविहायोगतिः प्रशस्ताप्रशस्तभेदात्द्विधा अगुरुलघूपघातपराघातातपोद्योतोच्छ्वासप्रत्येकसाधारण त्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरसूक्ष्मबादरपर्याप्तकापर्याप्तकस्थिरास्थिरत्वानादेय यशकीर्त्तिअयशःकीर्त्ति तीर्थंकरनामानि प्रत्येकमेकविधानीति गोत्रमुच्चनींचभेदात् द्विधाअंतरायं दानलाभभोगोपभोगवीर्यभेदात् पञ्चधेत्युक्तः प्रकृतिबन्धोबन्धकारणानितु गाथाभिरुच्यन्ते पडणीयमंतराइय उवघाएतप्पओ सणिण्हवणे आवरणदुगंबन्धइभूओ अच्चासणाए यभूयाणुकंपवय जोगउज्जुउखन्तिदाण गुरुभत्तोबंधइभूओसायंविवरीए बन्धतीइयरं अरहंतसिद्धचेइयतवसुअगुरु साधुसंघपडणीओ बन्धइदंसणमोहं अणंतसंसारिओ जेणंतिव्वकसाओ बहुमोहपरिणतो रागदोससंजुत्तोबन्धइ चरित्तमोहं दुविहंपि चरित्तगुणघाती मिच्छद्दिट्ठी महारंभपरिग्गहो तिव्वलोभणिस्सीलो निरआउयनिबंधइ पावमतीरोद्दपरिणामोउम्मग्गदेसओमग्गणासउ गूढहियबमाइल्लो सढसीलोअससल्लोतिरिआउं बन्धईजीवोपगतीएतणुउम्मग्गदेसओमग्गणासओगूढहियमाइल्लोकसाओ दानरओ सीलसंजमविहूणोमज्झि मगुणेहिंजुत्तोमणुयाओ बन्धतीजीवोअणुव्वयमहव्वए हियबालतवोकामनिज्जराएय देवाउयंणिबन्धइ सम्मद्दिट्ठीउजोजीवो मणवयणकायवंकोमाइ ल्लोगारवेहिं पडिबद्धोअसुभं बन्धइनामंतप्पडिपक्खेहिं सुभनामं अरिहंतादिसुभत्तोसुत्तरुई पयणुमाणगुणपेही बन्धइउच्चागोयं विवरीयंबन्धईइयरं पाणवहादीसुरतो जिणपूयामोक्खमग्गविग्धयरो अज्जेइअंतरायंणलहइजेणिच्छियंलाभं स्थितिबन्धोमूलोत्तर प्रकृतीनामुत्कृष्टभेद स्तोत्कृष्टान्मूलप्रकृतीनां ज्ञानावरणीयदर्शनावरणीयवेदनीयांतरायाणांत्रिंशत्सागरोपमकोटीकोट्योयस्य ययावत्यःकोटीकोट्यःस्थितिस्तस्य तावंत्येववर्षशतान्यबाधातदुपरिप्रदेशतोविपाकतोवा अनुभवएतदेव प्रतिकर्म्म स्थिति बोजनीयमिति सप्ततिर्मोहनीयस्य नामगोत्रयोर्विंशति स्त्रयस्त्रिंशत्सागरोपमान्यायुषः पूर्वकोटीत्रिभागोऽबाधा जघन्योज्ञानदर्शनावरण मोहनीयांतरायाणामंतर्मुहूर्तं नामगोत्रयोरष्टौ मुहूर्तावेदनीयस्य द्वादशआयुषःक्षुल्लकभवः सचानापान सप्तदशभागःसांप्रतमेतदेवबन्धद्वयमुत्तरप्रकृतीनामुच्यतेतत्तोत्कृष्टामतिश्रुतावधिमनः पर्यायकेवलावरण निद्रापंचकचक्षु दर्शनादिचतुष्का सद्वेद्यदानाद्यंतराय पञ्चकभेदानां विंशतेरुत्तरप्रकृतीनांत्रिंशत्सागरोपम कोटीकोट्यः स्त्रीवेदसातो वेदनीयमनुजगत्यानुपूर्वीणांच तत्त्वणांपञ्चदशमिथ्यात्वस्यैविक मोहनीयवत्कषाय षोडशकस्यचत्वारि शतकोटीकोट्यो नपुंसकवेदारति शोकभयजुगुप्सा नरकतिर्यग्गत्येकेन्द्रिय पञ्चदशमिथ्यात्वस्यैविक मोहनीयवत्कषाय षोडशकस्यचत्वारिंशतकोटीकोट्योनपुंसक वेदारतिशोकभयजुगुप्सा नरकतिर्यग्गत्येकेन्द्रिय जात्यौदारिकवैक्रियशरीरतदंगोपांगद्वयतैजसकार्म्मणहुंडसंस्थानांत्यसंहनन वर्ण गन्धरसस्पर्श नरकतिर्यगानुपूर्वी गुरुलघूपघातपराघातोच्छ्वासा तपोद्योताप्रशस्तविहायोगति त्रसस्थावरबादरपर्याप्तक प्रत्येकास्थिरा शुभदुर्भगदुस्वरनादेया यशःकीर्त्तिनिर्माण नीचैर्गोत्ररूपाणां त्रिचत्वारिंशत उत्तरप्रकृतीनां विंशतिःपुंवेदहास्यरतिदेव गत्यानुपूर्वीद्वये संस्थानसंहनन प्रशस्तविहायोगतिस्थित शुभसुभगसुस्वरादेय यशःकीर्त्युच्चैर्गोत्ररूपाणां पञ्चादशानामुत्तरप्रकृतीनां दशःन्यग्रोधसंस्थान द्वितीयसंहननयोर्द्वादश तृतीयसंस्थाननाराच संहननयोश्चतुर्दश कुब्जसंस्थानार्द्धनाराच संहननायाः षोडशवामनसंस्थान कीलिकासंहनन द्वित्रिचतुरिन्द्रियजाति सूक्ष्मापर्याप्तक साधारणानामष्टानामुत्तर प्रकृतीनामष्टादशआहारक तदंगोपांगतीर्थंकरनाम्नां सागरोपमकोटी कोटिभिन्नातर्मुहूर्त्तमबाधा देवनारकायुषोरैविक वर्त्तिर्यग्मनुष्यायुषः पल्योपमत्रयं पूर्वकोटित्रिभागोऽबाधा उत्कृष्टः स्थितिबंधोजघन्यउच्यते मत्यादिपञ्चचक्षुर्दर्शनाद्यावरण चतुष्कसंज्वलनलोभ

दानाद्यंतराय पञ्चकभेदानां पञ्चदशांनामंतर्मुहूर्त्तमवाबाधा निद्रापञ्चकासातावेदनीयानां पणांसागरोपमस्य त्रय:सप्तभागा:पल्यो
पमासंख्येयभागन्यूना: सातावेदनीयस्य द्वादशमुहूर्त्ता अंतर्मुहूर्त्तमबाधा मिथ्यात्वस्य सागरोपमं पल्योपमासंख्येयभागन्यूनंमाद्यकषा
यद्वादशकस्य चत्वार:सप्तभागा:सागरोपमस्य पल्योपमासंख्येयभागन्यूना संज्वलनक्रोधस्य मासद्वयंमानस्य मासस्त्वर्द्धंमायाया:पुंवे
दस्याष्टौसंवत्सरा: सर्वत्रांतर्मुहूर्त्तमबाधा शेषनोकषाय मनुष्यतिर्यग्गतिपञ्चेंद्रिय जात्यौदारिक तदंगोपांगतैजसकार्मण पट्संस्थानसं
हननवर्ण गंधरसस्पर्शतिर्यग्मनुजानुपूर्व्वी अगुरुलघूपघात पराघातोच्छ्वासा तपोद्योतप्रशस्ताप्रशस्त विहायोगतियशकीर्त्ति वर्जनसाटि
विंशतिकनिर्म्माणनीचैर्गोत्रदेव गत्यानुपूर्वीद्वयनरकगत्यानुपूर्वीद्वय वैक्रियशरीरतदंगोपांगरूपाणामष्टपञ्चुत्तर प्रकृतीनांप्रत्यन्तरेएवं
पाठ:देवद्विकनरकद्विक वैक्रियद्विक आहारकद्विक यश:कीर्त्ति तीर्थंकर नामरहितानां शेषनामप्रकृतीनां तथानीचैर्गोत्रस्यवेत्यासमु
त्तरप्रकृतीनां सागरोपमस्यद्वौसप्तभागौपल्योपमासंख्येयभाग न्यूनांअंतर्मुहूर्त्त मबाधावैक्रियपट्कस्यतुसागरोपमसहस्रस्यद्वौसप्तभा
गौपल्योपमासंख्येयभागन्यूनावंतर्मुहूर्त्त मबाधाआहारकतदंगोपांगतीर्थंकरनाम्नांसागरोपमकोटीकोटिर्भिन्नांतर्मुहूर्त्त मबाधानतु
चोत्कृष्टोप्येतावन्मात्रएवाभिहितस्तत: कोनयोर्भेदइत्युच्यतेउत्कृष्टात्संख्येयगुणहीनोजघन्यइति यश:कीर्त्त्युच्चैर्गोत्रयोरष्टमुहूर्त्तान्य
न्तर्मुहूर्त्तमबाधादेवनारकायुषोर्दशवर्षसहस्राण्यन्तर्मुहूर्त्तमबाधातिर्यग्मनुजायुषो:क्षुल्लकभवोंतर्मुहूर्त्त मबाधेतिबन्धनंसंघातयोरौ
दारिकादिशरीर सहचरितत्वात्तत्एवोत्कृष्ट जघन्यएवोत्कृष्टभेदो अवगन्तव्यइत्युक्त: स्थितिबन्धोनुभाव बन्धस्तूच्यते तत्रशुभाशुभा
नां कर्मप्रकृतीनां प्रयोगकर्म्मणोपात्तानां प्रकृतिस्थिति प्रदेशरूपाणां तीव्रमंदानुभावतयानुभवनमनुभाव: सचैकद्वित्रिचतु:स्थानभे
देनानुगंतव्य: तत्राशुभप्रकृतीनां कोशातकीरससमक्वथ्यमानार्द्ध त्रिभागपादावशेष तुल्यतया तीव्रानुभावो अवगन्तव्यो मंदानुभावस्तु
जातिरसैक द्वित्रिचतुर्गुणोदक प्रक्षेपास्वादतुल्यतयेति शुभानान्तु क्षीरेक्षुरसदृष्टात: पूर्ववद्योजनीयोत्रच कोशातकीनरसादावुदक
विंद्वादिप्रक्षेपात् व्यत्ययाद्वाभेदानामानंत्यमवसेयमिति अत्रचायुंषिभवविपाकीनि आनुपूर्व्य:क्षेत्रविपाकीन्य: शरीरसंस्थानांगोपांग
संघातसंहनन वर्णगन्धरसस्पर्शागुरुलघूपघात पराघातोद्योतातप निर्म्माणप्रत्येकसाधारणस्थिरास्थिर शुभाशुभरूपा: पुद्गलविपा
किन्य: शेषास्तुज्ञानावरणादिकाजीवविपाकिन्य इत्युक्तोनुभावबन्ध: प्रदेशबन्धस्त्वेकविधादि वंधकापेक्षयाभवति तत्रयदैकविधंबध्ना
ति तदाप्रयोगकर्म्मणैक समयोपात्ता: पुद्गला:सातावेदनीयभावेनविपरिणमंते षड्विधबन्धकस्यायुर्म्मोहनीय वर्ज्ज:षोढासप्तविधबन्ध
कस्यायुर्म्मोहनीयवर्ज्जं: षोढासप्तविधबन्धकस्य सप्तधाष्टविधबन्धकस्याष्टधेति तत्राद्यसमयप्रयोगांता: पुद्गलास्समुदानेन द्वितीयादिसम
येष्वल्पबहुप्रदेशतयानेनक्रमेणव्यवस्थापयति तत्रायुष:स्तोका: पुद्गलस्तेविशेषाधिका: प्रत्येकं नामगोत्रयो: परस्परतस्तुल्यास्तद्विशेषा
धिका:प्रत्येकज्ञानदर्शनावरणांतरायाणां तेभ्योविशेषाधिकामोहनीयेनतुचतेभ्योविशेषाधिकाइत्यत्रनिर्द्धारणेपञ्चमीसाचपंचमीविभ
क्तेइत्यनेनसूत्रेण विधीयते अस्यचायमर्थोविभागो विभक्तांतत्रपञ्चमी विधीयमानायत्रात्यन्त विभागस्तत्रैवभवतियथामाथुरेभ्य:पाट
लिपुत्रका अभिरूपतया इहचकर्म्म पुद्गलानां सर्वदैकत्वं तथावस्थानासेवच वुद्ध्यावहुप्रदेशादिगुणेन पृथक्करणेचिकीर्षितं तत्रपष्टीस
प्तमीवान्याय्या तद्यथागवांगोषुवा कृष्णासंपन्नक्षीरतमेति नैषदोषोयत्रावध्य वन्धिमतो: सामान्यवाचीशब्द: प्रयुज्यते तत्रैवपष्टीसप्त
म्यौयतश्च निर्द्धारणमित्यनेन सूत्रेणविधीयते यथागवांकृष्णासंपन्नक्षीरतमा: मनुष्येषुपाटलिपुत्रका: आढ्यतरा: कर्म्मवर्गणापुद्ग
लानां वेदनीयेवहुतराइति यत्रपुनर्विशेषवाचीशब्दो अवधित्वेनोपादीयते तत्रपञ्चम्येव यथाखण्डमुण्ड शवलशावलेय धवलधावलेय
धवलव्यक्तिभ्य: कृष्णासंपन्नक्षीरतमेत्यतोमात्र विभाग: कारणमविभागोवा यतोमाथुर पाटलिपुत्रकादि विभागेन विभक्तानामपिसा
मान्यमनुष्यादि शब्दोच्चारणेपष्टी सप्तम्योभवतोयत्रतु पुनर्म्माथुरादिविशेषा अवधित्वेनापादीयते तत्रकार्यवशादेकस्थानामपि पञ्च
म्येव तदिहसत्यपि कर्म्मवर्गणानामेकत्वे तद्विशेषस्याधिकावेदनीये उक्त:प्रदेशबन्धस्समुदानकर्म्मापीति सांप्रतमीर्यापथिकं इरगति
प्रेरणयोरस्माद्भावेण्यत् ईरणमीर्यातस्या: पन्थाईर्यापथस्तत्र भवमीर्यापथिकं कश्चेर्याया:पन्थाभवति यदास्थतासाभवत्येतच्च व्यत्यन्ति

निमित्तं यतस्थितितोपि तद्भवति प्रवृत्तिनिमित्तं तु स्थित्यभावस्तञ्चोपशांत क्षीणमोहसयोगकेवलिनांभवति सयोगकेवलिनोपिद्विति त्वतोपि सूक्ष्मगात्रसञ्चारोभवंत्युक्तञ्च केवलीणंभंते अस्सिंसमयंसि जेसुआगासपदेसेसुहत्थं वा पायंवाओगाहित्ताणं पडिसाहरेज्जा पभूणंभंते केवलीतेसुचेवा गासपदेसेसुपडि साहरित्तएणोइणट्ठे समट्ठेकहं केवलिस्सणंचलाइं सरीरोवगरणाइं भवन्तिव लोवगर णत्ताएकेवलीणोसञ्चाएति तेसुचेवागासपदेसे सुहत्थंवापायंवा पडिसाहरित्तए तदेवंसूक्ष्मतरगात्र सञ्चाररूपेण योगेनयत्कर्म्म व ध्यते तदीर्यापथिकमीर्या हेतुकमित्यर्थः तच्चद्विसमयस्थितिकं एकस्मिन्समयेवेदितं त्तीयसमयेतदपेक्षया चाकर्म्मतेति कथमित्यु च्यते यतस्तत्प्रकृतितः सातावेदनीयमकषायत्वात् स्थित्यभावेन बध्यमानमेवपरिशदति अनुभावतोनुत्तरोपपातिक सुखातिशायि प्रदेशतःस्थूलरूक्ष शुक्लादिबहुप्रदेशमिति उक्तंच अप्पं बायरमउयं बहुं चलुक्खंचसुक्किलंचेव मंदंमहव्वतंतियसाता बहुलंचतंकम्मं अल्पंस्थितितः स्थितेरेवाभावात् बादरंपरिणामततोनुभावतो मृद्वनुभावंबहुवबहुप्रदेशैरूक्षं स्पर्शतोवर्णेन शुक्लं मंदंलोपतः स्थूलचू र्णमुष्टिमुष्टक्त कुड्यापतितलेपवत् महाव्ययमेकसमयेनैव सर्वापगमत्वतो बहुलमनुत्तरोपपातिक सुखातिशायीति उक्तमीर्यापथिकम धुनाआधाकर्म्म यदाधारनिमित्तत्वेनाश्रित्य पूर्वोक्तमष्टप्रकारमपि कर्म्म बध्यते तदाधाकर्म्मेति तच्चशब्दस्पर्शरसरूप गन्धादिकमिति तथाहि शब्दादिकामगुणविषयाभिष्वङ्गवान् सुखलिप्सुर्मोहोपहतचेताः परमार्थासुखमयेष्वपि सुखाध्यारोपं विदधाति तदुक्तं दुःखा त्मिकेषुविषयेषु सुखाभिमानः सौख्यात्मकेषु नियमादिषु दुःखबुद्धिः उत्कीर्ण वर्ण पद पंक्तिरिवान्यरूपा सारूप्यमेति विपरीतगतिप्र योगात् एतदुक्तं भवति कर्म्म निमित्तभूता मनोज्ञेतरशब्दादय एवाधाकर्म्मेत्युच्यन्तेइति तपःकर्म्म तस्यैवाष्टप्रकारस्य कर्म्मणोवद्धस्पृष्ट निधत्तनिकाचिता वस्थस्यापि निर्ज्जराहेतुभूतं वाह्याभ्यन्तरभेदेन द्वादशप्रकारंतपः कर्म्मोच्यते कृतिकर्म्म तस्यैवकर्म्मणोपनकारक मर्हत्सिद्धाचार्योपाध्याय विषयेअवनामादिरूपमिभावकर्म्म पुनरवाधासुत्तं ब्यस्योदयेना क्षीरणाकरणेनचोदीर्णपुद्गलाःप्रदेशविपाके स्योभवत्वेव पुद्गलजीवेष्वनुभावंददतो भावकर्म्म शब्देनोच्यतइति तदेवंनामादिनिक्षेपेण द्व्याधाकर्मोक्तमिहतु समुदानकर्मोपात्तेना ष्टविधकर्म्मणाधिकारइति गाथाशकलेनदर्शयति अट्ठविहेणाउकम्मेणाएत्थहोइ अहीणारोत्तिगाथार्द्धं कंथ्यमिति गाथाद्वयपरमार्थस्त देवं सूत्रानुगमेन सूत्रे समुच्चारिते निक्षेपनिर्युक्त्यनुगमेन प्रतिपदंनिक्षिप्ते नामादिनिक्षेपेच व्याख्यातेसत्युत्तरकालं सूत्रं विव्रियते जेगुणेसेमूलट्ठाणे अस्यचानन्तरपरंपरादिसूत्रैः संबंधोवाच्यस्तत्रानन्तर सूत्रसम्बन्धः सेहुमुणीपरिणायकम्मेति समुनिःपरिज्ञातक र्माभवति यस्यैतन्नुणमूलादिकमधिगतंभवति परंपरसूत्रसंबंधस्तुसेज्ज पुणाजाणेज्जा सहसंमुइयापरवागरणेणं अन्नेसिंवासोच्चास्सस मत्या परव्याकरणेन तीर्थंकरोपदेशादन्येभ्यो वाचार्यादिभ्यः श्रुत्वाजानीयात्परिच्छिन्द्यात् किं तदित्युच्यते जेगुणेसेमूलट्ठाणे आदिसूत्रसम्बन्धस्तु सुयंमेआउसंतेणं भगवयाएवमक्खायं किंततृश्रुतं भवता यद्भगवता आयुष्मताख्यातमित्युच्यते जेगुणेसेमूल ट्ठाणेइति सर्वनामप्रथमांतं मागधदेशी वचनत्वादेकारांतं सामान्योद्देशार्थाभिधायीति गुण्यतेभिद्यते विव्यतेनेन द्रव्यमिति गुणः सचेह शब्दरूपरस गन्धस्पर्शादिकस्सइति सर्वनामप्रथमांतमुद्दिष्ट निर्देशार्थाभिधायीति मूलमितिनिमित्तं कारणं प्रत्यय इतिपर्यायास्तिष्ठंत्यस्मिन्नितिस्थानं मूलस्यस्थानंमूलस्थानं व्यवच्छेदफलत्वाद्वाक्यानामितिन्यायात् सएवशब्दादिकः कामगुणःसएव शब्दादिकः कामगुणः सएव संसारस्य नारकतिर्यग्नरामरसंसृति लक्षणस्य यन्मूलं कारणं कषायास्तेषां स्थानमाश्रयोवर्त्तते यस्मा न्मनोज्ञेतरशब्दाद्युपलब्धौ कषायोदयस्ततोपि संसारइत्यथवा मूलमिति कारणं तच्चाष्टप्रकारं कर्म्मतस्य स्थानाश्रयः कामगुण इत्यथ वा मूलं मोहनीयं तद्भेदो वा कामस्तस्यस्थानं शब्दादिको विषयगुणोयथवा मूलंशब्दादिको विषयगुणस्तस्य स्थानमिष्टानिष्ट विषयगुणं इत्यथ वा मूलं मोहनीयं तद्भेदो वा कामस्तस्य स्थानं शब्दादिष्ववस्थितो गुणरूपः संसारएवात्मा वा शब्दाद्युपयोगा नन्यत्वाद्गुणोयथवा मूलंसंसारस्तस्यशब्दादयः स्थानं कषायावागुणोपि शब्दादिकः कषायपरिणतोवात्मेति यदिवामूलं संसारस्यश ब्दादिकषायपरिणतः सन्नात्मास्तस्य स्थानशब्दादिकं गुणोप्यसावेवेति ततश्चसर्वथायएवगुणः सएवमूलस्थानंवर्त्तते ननुचवर्त्तं नक्रिया

या:सूत्रेप्यनुपादानात् कथं प्रक्षेपइत्युच्यते यत्रह्विकाचिद्विशेषक्रियानैवोपादायितत्र सामान्यक्रिया अस्तिभवति विद्यतेवर्त्तनादृत्या दिकामुपादायवाक्यं परिसमाप्यते एवमन्यत्रापि द्रष्टव्यमिति अथवामूलमित्याद्यं प्रधानंवास्थानमितिकारणं मूलञ्चतत्कारणंचेतिवि गृह्यकर्म्मधारय: ततश्चयएवशब्दादिकोगुण: सएवमूलस्थानं संपाद्यप्रधानंवा कारणमिति शेषंपूर्ववदिति सांप्रतमनयोरेव गुणमूल स्थानयोर्नियम्यनियामकभावं दर्शयंस्तदुपात्तानां विषयकषायादीनां वीजांकुरन्यायेन परस्परत: कार्यकारणभावं सूत्रेणैवततश्चदर्श यतिजेमूलट्ठाणेसेगुणेत्ति यदेवसंसारमूलानांवा कषायानास्थानमाश्रय: शब्दादिको गुणोप्यसातेवाथवाकषायमूलानां शब्दादीनांयत् स्थानंकर्मसंसारोवा तत्तत्स्वभावापत्तेर्गुणोप्यसावेवेत्यथवा शब्दादिकषायपरिणामस्मूलस्य संसारस्य कर्म्मणोवायत्स्थानंमोहनीयंक र्म्म शब्दादिकषायपरिणतोवात्मेति तद्गुणावाप्तेर्गुणोप्यसावेव यदिवासंसारकषायमूलस्यात्मनोयत्स्थानं विषयाभिष्वंगोसावपिशब्दा दिविषयत्वाद्गुणरूपवेति अत्रचविषयोपादानेन विषयिणोप्याक्षेपात् सूचनार्थत्वाच्च सूत्रस्येत्येवमपिद्रष्टव्यं योगुणेषुवावर्त्ततेस मूलस्थानेमूलस्थानेषुवावर्त्तते योमूलस्थानादौ वर्त्तते सएवगुणादौवर्त्तत इति यएवजन्तुशब्दादिके प्राग्व्यावर्णितस्वरूपेगुणेवर्त्तते सएवसंसारमूलकषायादिस्थानादौ वर्त्तते एतदेवद्वितीयसूत्रापेक्षयाव्यत्ययेन प्राग्वदायोज्यमनंतगमपर्यायत्वात् सूत्रस्येवमपिद्रष्टव्यं योगुणस्यएवमूलं सएवचस्थानं यन्मूलंतदेवगुणस्थानमपितदेवयतस्थानं तदेवगुणोमूलमपितदेवेतियोगुण:शब्दादिकोसावेवसंसारस्य कषायकारणत्वान्मूलं स्थानमप्यसावेवेत्येव मन्येष्वपि विकल्पेषुयोज्यं विषयनिर्देशेच विषयप्यात्क्षिप्तोयो गुणेवर्त्ततेसमूलेस्थानेचे त्येवंसर्वत्रद्रष्टव्यमिहच सर्वज्ञप्रणीतत्वादनंतार्थता सूत्रस्यावगन्तव्या तथाहिमूलमत्रकषायादिकमुपन्यस्तं कषायाश्चक्रोधादयश्चत्वार: क्रोधाप्यनंतानुबंधादिभेदेनचतुर्द्धा अनंतानुबंधिनोप्यसंख्येय लोकाकाशप्रदेशप्रमाणानिवन्धाध्यवसायस्थानान्यनंताश्चतत्पर्यायास्तेषां चप्रत्येकंस्थानगुणनिरूपणमनंतार्थतासूत्रस्य संपद्यते साचछद्मस्थेन सर्वायुपाप्यविषयत्वाच्चाशक्यादर्शयितुंदिग्दर्शनन्तुकृतमेवातोन यादिशाकुशाग्रीयासमुख्यागुणमूलस्थानानांपरस्परत: कार्यकारणभाव:संयोजनाचकार्येति तदेवंयएवगुण:सएवमूलस्थानंयदेवंमूल स्थानंसएवगुणइत्युक्तंतत:किमित्यतआहइतिसेगुणट्ठीमहयाइत्यादिइतिहेतो यस्माच्छब्दादिगुणपरीत आत्माकषायमूलस्थानेसंवर्त्त तेसर्वोपिचप्राणीगुणार्थीगुणप्रयोजनीगुणानुरागीत्यतस्तेषां गुणानामप्राप्तौप्राप्तिनाशेवा कांक्षाशोकाभ्यासप्राणीमहतापरिमितेनप रिसमंतत्तोप:परितापस्तेनशारीरमानसस्वभावेनदु:खेनाभिभूत:सन् पौपुन:पुण्येनतेषुतेषुस्थानेषुवसेत्तिष्ठे इत्यद्येतकिंभूत:सन्प्रमत्त: प्रमादश्चरागद्वेषात्मको द्वेपञ्च प्रायोनरागस्तेरागोप्युत्पत्तेरारभ्यानादिभवाभ्यासान्मातापित्रादिविषयोभवतीति दर्शयतिमायामे इत्यादितत्रमातृविषयोराग: संसारस्वभावादुपकारकर्तृत्वाद्वोपजायतेरागे चसतिमदीयामाताक्षुत्पिपासादिकांवेदनामाप्रापयदित्यत: कृषिवाणिज्यसेवादिकाप्राण्युपघातरूपां क्रियामारभते तदुपघातकारिणिवा तस्यांवाकार्यप्रवृत्तायांद्वेष उपजायते तद्यथानंतवीर्यप्रश प्तायां रेणुकायांरामस्येति एवंपितामे पितृनिमित्तं रागद्वेषौ भवतोयथारामेण पितरिरागात्तदुपहंतरिच द्वेषात्सप्तकृत्व: क्षत्रिया व्यापादिता: सुभूमेनापित्रि:सप्तकृत्वो ब्राह्मणाइतिभगिनी निमित्तेनच क्लेशमनुभवतिप्राणीतथाभार्यानिमित्तंरागद्वेषोद्भवस्तद्यथा चाणक्येनभगिनीपत्याद्यवज्ञातया भार्ययाचोदितेन नन्दान्तिकं द्रव्यार्थमुपगतेन कोपंनंदकुलक्षयं निन्येतथा पुत्रामेनजीवंतीत्या रंभेप्रवर्त्तते एवंदुहितामेदु:खिनीति रागद्वेषोपहतचेता: परमार्थमजानानस्तत्तद्विधत्ते नैहिकामुष्मिकानपायानवाप्नोतितद्यथा जरासंधोजामातरिकं सव्यापादिते स्वबलावलेपादपहृतवास्तदेव पदानुसारी सबलवाहन: क्षयमगात् स्नुषामेन जीवंतीत्यारंभा दौप्रवर्त्तते सखिस्वजनसंग्रंथसंस्तुतामेसखामित्रं स्वजन:व्यादि:संग्रंथ: स्वजनस्यापि स्वजन:पितृव्यपुत्रशालादि: संस्तुतोभूयोभूयोद र्शनेनपरिचितोथवा पूर्वसंस्तुतो मातापित्रादिरभिहित: पश्चात्संस्तुत: शालकादि:सइहग्राह्य: सचमेदु:खितइति परितप्यतेविविक्तं शोभनंप्रचुरंवा उपकरणं हस्त्यश्वरथासनमंचकादिपरिवर्त्तनं द्विगुणत्रिगुणादिभेदं तदेवभोजनं मोदकादि आच्छादनंपट्टयुग्मादि तन्मेभविष्यतितदंवा इज्ञत्यमिति इत्येवमर्थं गृद्धोलोक: तेष्वेवमातापित्रादि रागादिनिमित्त स्थानेष्वामरणं प्रमत्तोममेदमहमस्य

विवित्तोपकरणपरियट्टणभोयणच्छायणं सेदूज्जत्थं गढिए तत्तो एव से पमत्ते अहो य राओ य परितप्पमाणे का-
लाकालसमुट्ठाई संजोगट्ठी अट्ठालोभी आलुंपे सहसाकारे विणिविट्ठचित्ते एत्थ सत्थे पुणो पुणो अप्पं च
खलु आउयं इहमेगेसिं माणवाणं तं जहा सोयपरिन्नाणेहिं परिहायमाणेहिं चक्खुपरिन्नाणेहिं परि-
हायमाणेहिं घाणपरिन्नाणेहिं परिहायमाणेहिं रसणपरिन्नाणेहिं परिहायमाणेहिं फासपरिन्ना

भाषा

सुखिसुखियो तेहनेदुक्खियेदुखीयाइ तथा विवित्त कहतां छंडो अथवा घणो उपगरण हार्यादोडारय आसन मञ्चकादिकपरियट्टण कह-
ताइ छइजउपगरणविगुणोत्तिगुणो तथा भोजन मोदकादिक आच्छादन वस्त्रादिक एसाहरो तेहनेराखिवानो यत्न करे एसूत्र्यं कहतां ए
पूर्वोक्त तेहने अर्थ गृद्ध लोकप्रमत्त थको आसरणां तलगेर हे पर लगार उसरैनहीं तेग दिक्षनेटी दृष्णितप्पमानकहतां सोच करतो तेहनी
आर्त्ति दूपड्यो ताइ वे आविवेकार्थ करिवे कालअनेअकाल गिणेनहीं गसेति वारे उद्यम करे तेहने वांछे संजोगट्टी धन धान्य द्विपद चतुष्प-
दादि संयोग नो अर्थी कालाकाल जाणे नहीं तथा अर्थ नो लोभी एहवो थको स्योंकरे आलुंपे कहतां तिलो भार्योंक्तोनिर्लाञ्छन गलकर्तनादिक
रे अनेक चौर्यादि क्रियाकरे तथा सहसाकारे आलापंकरतो पूर्वापरविरुद्ध अपायनो आरम्भकाइ विमासे नहीं अणआलोच्यों कार्य करे
तथा विणिविट्ठचित्ते विविध नानाप्रकार मातापितादि विषे वितथा धनादि विषे निविष्ट कहतां स्थाप्यो चित्त छे जेणें एहवो थको दुर्गे छकाय
प्राणी विषे शस्त्र तेहना वात भणी वली र प्रवर्त्ते एतावता छकायना आरंभ थकी निवर्त्ते नहीं छिंग्येत लाइ आरम्भना करणहार अन
रामरतया दीर्घायुपणो नथाइ एहवो भाव देखाडे छे सूत्र अप्पं च क० खलु निश्चये इह संसारे मनुष्यभवे एकेषां केषांचिद्देवमानवानां
आयुः प्राणधारणे अल्प स्तोकं यद्यपि पल्योपम त्रयायुषः पुरुषास्त्रयाप्यवसाने मरणं प्राप्नुवंत्येव येपि च दीर्घायुष्कोपक्रमणकारणाभा
वे आयुः स्थिति मनुभवन्ति तेपि जरापराभूताः संतोऽत्यन्तं दुःखावस्था मनुभवन्तीति दर्शयति यद्यथा श्रोत्रपरिज्ञानैः कर्णेन्द्रियेण घट
पट गन्धादि विषयाणि परिज्ञानानि तैः जराप्रभावात्परिहीयमानैः सद्भिरेवं चक्षुःपरिज्ञानैः परिहीयमानैः घ्राणपरिज्ञानैः रसनपरि-
ज्ञानैः स्पर्शनपरिज्ञानैः परिहीयमानैः एतानीन्द्रियविज्ञानानि वयो ति क्रमे परिहीयन्त इति दर्शयति अतिक्रांतं च खलु वयो यौवना-
दिकं प्रेक्ष्य ततोसौ प्राणी एकदा वृद्धावस्थायां मूढभावं हिताहितप्राप्ति विवेक शून्यतां नयति संपादयतीत्यर्थः स प्राणी एवं वार्द्धके मूढभावः
सन् प्रायेण लोकैरवज्ञायते इति दर्शयति जेहिं वा आस्तां तावदन्यो जनस्तैः पुत्रकलत्रादिभिः सार्द्धं सह संवसति त एव भार्यादयो णमिति
वाक्यालंकारे एकदा वृद्धावस्थायां चिरन्तन रोगोदयेवा निजकाश्चात्मीयाः परिवदन्ति परिभवंति यथायं न म्रियते नेन संचकांसु चतिकिमने
नष्टहैन विचलित मतिना स्माकं स्वजनादि समवाये मिलितं लज्जा समुत्पद्यते इत्यादि परिभव वचनानि ब्रुवते तथा च सोपि जराजर्जरित
देहस्तान्निजकान् अनेक दोषोद्घट्टनेन परिवदेत् निन्दतीत्यर्थः तदपवादात् लोकाग्रे व्याकरोति अहो एते दुष्टा मम पुत्रा मां न प्रतिपाल
यंतं मम सारां न कुर्वंति इत्यादि स्तावित्काः ज्ञातव्याः इत्यादि यदि वदति अथ कदाचित् पूर्व सुकृत वशात्तं वृद्धं न परिभवन्ति शुश्रूषते च तथा
पिदुःखापनयन समर्थो न भवतीति दर्शयति नालंत क० नालं न समर्थास्ते पुत्रकलत्रादय स्तूं चरे जीवत्राणाद शरणायत्वमपि तेषां नालं त्वा
णाय वा शरणाद वा तत्र च जन्म जरा मरण भय दरभिद्रु ते व्याधि वेदनाग्रस्ते जिनवर वचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥ १ ॥ अर्थ दूणिस-
सार सादि एक मनुष्यनों आउखो अल्पयोडोंयइ जइवणो आउतो पल्योपम त्रिणि मनुष्य जीवने परं अवसाने तिहे मृत्यु पासे तथा कोइ
एक दीर्घायु भोगवेतो पुण तेहने जरा विडंवे एभाव कहे छे श्रोत्रपरिज्ञान कर्णेन्द्रियना विज्ञान जराने प्रभावे परिहायमानि तथा चक्षु
परिज्ञान घ्राणपरिज्ञान रसनपरिज्ञान स्पर्शपरिज्ञानि इम पंच इंद्रियविज्ञानि हीणा होते नेह भणी खलु निश्चे वय यौवन अतिक्रम्यो
जराइ व्याप्यो एहवो आपणो सीं तिवारपछे तेप्राणी एकदा वृद्धावस्थाइं मूढभाव निःकर्त्तव्यता मूढपणो पामे एतावता विवेक विकलथा

दीपिकाटीका

भनंप्रचुरंवा उपकरणंहस्त्यऽश्वरथासन मञ्चकादिपरिवर्त्तनं द्विगुणत्रिगुणादिभेदं तदेवभोजनंमोदकादि आच्छादनंपट्टयुग्मादि तच्च
मेभविष्यति नहट्टंवाइच्चत्थंगढिएन्ति इत्येवमर्थंरुद्धोलोक: तेष्वेवमातापित्रादि रागादिनिमित्तस्थानेषु आसरणंप्रमत्तोसमेदं अह
मस्यस्वामीपोषकोवा इत्येवंमोहितमति: वस्येत्तिष्टेत् तदेवंकषायेन्द्रिय प्रमत्तोमातापित्राद्यर्थं अर्थोपार्जनरक्षणतत्परो दु:खमेवकेव
लमनुभवतीत्याह अहोयराओपरितप्पमाणे अहश्चदिवसंरात्रिञ्च चशब्दात्पक्षमासञ्च निवृत्तशुभाध्यवसाय परिसमंतात्तप्यमान:सन्
तिष्ठति कइयावच्चइसत्थोकिं भण्डं कत्थकित्तिया भूमीकोकयविक्कयकालो निव्विसइकिंकहिं केण१सचपरितप्यमान: किंभूतोभवती
त्याह कालाकालसमुट्ठायीति काल:कर्त्तव्यावसरस्तद्विपर्यासो अकाल:सम्यगुत्थातु मभ्युद्यतुंशीलमस्येति समुत्थायीतिपदार्थ: वाक्या
र्थस्तु यथाकालेकर्त्तव्यावसरे अकालेनतद्विपर्यासेन समुत्तिष्ठते कर्त्तव्यावसरे मनस्कत्तादपगत कालाकालविवेक: यथाचण्डप्रद्यो
तेन मृगावतीअपगतभर्तृका सतीग्रहणकालमति वाह्यकृतप्राकारादि रक्षाजिष्टच्चिताय: पुन:सम्यक्कालोत्थायीभवति सयथाकालं
परस्पराऽनाबाधया सर्वा:क्रिया:करोति तदुक्तंमासैरष्टभिरह्नाच पूर्वेणवयसायुषा तत्कर्त्तव्यंमनुष्येण येनांतेसुखमेधते १धर्मानुष्ठान
स्यचनकश्चित्कालो मृत्योरिवेति किमर्थंपुन:कालाकाल समुत्थायीभवतीत्याह संनोगट्ठीसंयुज्यते संयोजनंवासंयोगोर्थ: प्रयोजनंसो
स्यास्तीतिसंयोगार्थी तत्रधनधान्यहिरण्य द्विपदचतुष्पदराज्यभार्यादि संयोगादिसंयोगस्तेनार्थी तत्प्रयोजनीकालाकाल समुत्थायीभ
वतीति किञ्चअट्ठालोभी अर्थोरत्नकुप्यादिस्तत्र आसमंतात्लोभो अर्थालोभ:सविद्यतेयस्येति असावपि कालाकालसमुत्थायीभवति
मम्मणवणिगवत् तथाहिअसौ अतिक्रांतार्थोपार्जन समर्थयौवनतया जलस्थलपथप्रेषित नानादेशभाण्ड भृतवोहित्थगंटकोट्टमंड
लिकासंभृत सम्भारोपिप्रावृषि सप्तरात्रावच्छिन्न मुशलप्रमाणधारावर्ष निरुद्धसकलप्राणिगण सञ्चारमनोरथायां महानदीजलपूरा
नीतकाष्ठादि जिघृक्षुरुपभोग धर्मावसरेनिवृत्ता अपराशेषशुभपरिणाम: केवलमर्थोपार्जन प्रवृत्तइति पुनरपिलोभिनो अशुभव्यापा
रानाह आलुंपेआसमंताल्लुंपतीत्यालुंप: सहिलोभाभिभूतांत:करणो अपगतकर्त्तव्याकर्त्तव्य विवेकोअर्थलोभैकदत्तदृष्टि: ऐहिका
मुष्मिकविपाककारिणी निर्लांच्छनगलकर्त्तन चौर्यादिका:क्रिया:करोति अन्यच्चसहसाकारेकरणंकार: असमीच्चित पूर्वापरदोषंसह
साकरणं सहसाकार: तथाहिलोभतिमिराच्छादित दृष्टिरर्थैकमना: शंकुंतवच्छराघातमनालोच्यमांसाभिलाषितया गात्रसंधिच्छेद
नार्दितोविनश्यति लोभाभिभूतोअर्थमेव पश्यतिनापायान्आहच विणिविट्ठचित्ते विविधमनेकधानिविष्टं स्थितंअवगाढं अर्थोपार्ज
नोपाये मातापित्राद्यभिष्वंगेवा शब्दादिविषयोपभोगेवा चित्तमंत:करणं यस्यासौविनिविष्टचित्त: एवंविधश्चकिंभवतीत्याह एत्थस
त्थेत्ति अत्रास्मिन्मातापित्रादौ शब्दादिविषयसंयोगेवा विनिविष्टचित्त:सन् पृथिवीकायादि जन्तूनांयत्शस्त्रमुपघातकारि तत्रपुन:२
प्रवर्त्तते एतच्चसांप्रतेच्चिणामपियुज्येत यदिअजरामरत्वं दीर्घायुष्कत्वंवास्यात् तच्चोभयमपि नास्तीत्याह अप्पञ्चखलुआउं इहमेगेसिं
माणवाणं तंजहासोअपरिण्णाणेहिंपरिहायमाणेहिं चक्खुपरिण्णाणेहिंपरिहायमाणेहिंघाणपरिण्णाणेहिं परिहायमाणेहिंरसपरिण्णा
णेहिं परिहायमाणेहिं फासपरिण्णाणेहिं परिहायमाणेहिं अभिकन्तंचखलुव यंसपेहाए ततोसेएगदामूढभावंजणयन्ति जेहिंवास
द्धिंसंवसति तेविणंएगदाणिय गापुव्विंपरिवयंति सोवितेणियएपच्छापरिवएज्जानालन्तेतवताणाए वासरणाएवातुमंपितेसिं नालंता
णाएवासरणाएवा अप्पंचत्ति अल्पंस्तोकअशब्दोऽधिक वचनेखलुरवधारणे आयुरितिभवस्थितिहेतव: कर्मपुद्गलानांवाइहेतिसंसा
रेमनुष्यभवेवा एकेषांकेषाञ्चिदेव मानवानांमनुजानाञ्च शब्दादुत्तरोत्तर समयादिहयामल्योपम तयावस्थानेप्यायुषि खलुशब्दस्याव
धारणार्थत्वात्संयमायुष्कं तत्राल्पमेवेति तथाहिअंतर्मुहूर्त्तादारभ्य देशोनपूर्वकोटिं यावत्संयमायुष्कन्तत्वाल्पमेवेति येपिचदीर्घाय
ष्कंस्थितिका उपक्रमणकारणाभावे आयु:स्थितिमनुभवन्ति तेपिमरणादप्यधिकां जराभिभूतविग्रहां जघन्यतरामवस्थामनुभवन्तीति
तद्यथेत्यादिनादर्शयति सोयपरिण्णाणेहिंतिश्रृणोति भाषापरिणतान् पुद्गलानितिश्रोतुं तत्कदम्बपुष्पाकारं द्रव्यतोभाषाद्रव्यग्रहणल

स्थितप्रयोगस्वभावं तेनश्रोत्रेणपरि: समन्तात्घटपटशब्दादि विषयाणिज्ञानानि परिज्ञानानि तैःश्रोत्रपरिज्ञानैर्जरा प्रभावात्परिही यमानै:सद्भिस्ततोसौ प्राणीएकदाहृद्ध वस्थाया रोगोदयावसरेवामूढभावंमूढतां कर्त्तव्याकरतव्यज्ञतामिन्द्रियपाटवाभावात्आत्मनोज नयति हिताहितप्राप्तिपरिहार विवेकशून्यतामापद्यतेइत्यर्थ: एवंचक्षुरादिविज्ञानेष्वपियोज्यं श्रोत्रादिविज्ञानानिच वयोऽतिक्रमेपरि

शीलंगाचार्यकृतटीका

स्वामीपोषकोवेत्येवं सोहितमनावर्त्तेत्तिष्टेदित्युक्तंच पुत्रामेस्वजनामे गृहकलत्रवर्गोमेइतिकृतासामशब्दं पशुमिव मृत्युर्जनंहरति पुत्रकलत्रपरिग्रह ममत्वदोषैर्नरोव्रजतिनाशं कृमिकइवकोशकार: परिग्रहाद्दु:खमाप्नोति अमुमेवार्थं निर्युक्तिकारो गाथाद्वयेनाह संसारंच्छेतुमणागाहा मायामेत्तिगाहा संसारंनारकतिर्यग्नरामरलक्षणं मातापितृभार्यादि स्नेहलक्षणंवा च्छेतुमना उन्मूलयिपु रष्टप्रकारं कर्म्मेत्मिलयेत्तदुन्मूलनार्थंच तत्कारणभूतान्कषायानुन्मूलयेत् कषायाअपगमनायच मातापित्रा दिगतं स्नेहं जह्या द्यस्मान्मातापित्रादिसंयोगाभिलाषिणो अर्थैरत्नकुप्यादिके गृद्धा अध्युपपन्ना जन्मजरामरणादिकानि दु:खान्यसुप्रतप्र:प्नुवन्तीति गाथाद्वयार्थ:तदेवंकषायेन्द्रियसमक्तो मातापित्राद्यर्थं मर्थोपार्ज्जनरक्षण तत्परोदु:खमेवकेव लमनुभवतीत्याहअहोइत्यादि अहश्च संपूर्णंरात्रिश्च चशब्दात्पक्षं मासंचनिष्टत्त शुभाध्यवसाय: परिसमंतात्तप्यमान: परितप्यमाना:सन् तिष्ठतितद्यथाकइयावज्जइस्लोकिं भण्डं कल्यकित्तियाभूमी कोकयविक्कयकालो निव्विसइ किंकहिंकेणइत्यादि सचपरितप्यमान: किम्भूतोभवतीत्याह कालेत्यादिकाल: कर्त्तव्यावसरस्तद्विपर्यासो काल:सम्यगुत्थातु मभ्युद्यतुशीलमस्येति समुत्थायीतिपदार्थ: वाक्यार्थस्तु कालेकर्त्तव्यावसरे अकालेन तद्विपर्यासेन समुत्तिष्ठते अभ्युद्यममनुष्ठानंकरोति तच्छीलश्चेति कर्त्तव्यावसरेन करोतीत्यन्यदाचविदधातीति यथाकालेकरोत्येवम कालेपीति यथावानवसरे नकरोत्येवमवसरेपीति अन्यमनस्कत्वादपगत कालविवेकइतिभावनायथा प्रद्योतेनत्त्गापतिरपगतभर्त्तृका सतीग्रहणकालमतिवादाकृत प्राकारादिरक्षा जिष्टचिनेतियस्तु पुन:सम्यक्कालोत्थायीभवति सयथाकालं परस्पराबाधया सर्वा:क्रिया करोतीति तदुक्तं मासैरष्टभिरह्नाच पूर्वेणवयसायुषा ततकर्त्तव्यं मनुष्येणयेनांतेसुखमेधते धर्म्मानुष्ठानस्यचन कश्चिदकाल.स्तत्योरि वेति किमर्थंपुन: कालाकालसमुत्थायी भवतीत्याह संजोगट्ठीसंयुज्जते संयोजनं वा संयोगोर्थ:प्रयोजनं सो अस्यास्तीति संयोगार्थी तत्रधनधान्यहिरण्य द्विपदचतुष्पद राज्यभार्यादि संयोगस्तेनार्थी तत्प्रयोजनी अथवाशब्दादिविषय: संयोगो मातापित्रादिभिर्वाते नार्थी कालाकालसमुत्थायीभवतीति किञ्च अट्ठालोभीअर्थोरत्न कुप्यादिस्तत्समन्ताल्लोभोर्थालोभ: सविद्यतेयस्येत्यसावपिकालाकाल समुत्थायीभवति मम्मणवणिग्वत्तया ह्यसावतिक्रांतार्थोपार्ज्जनसमर्थ यौवनवयाजलस्थलपथप्रेषित नानादेशभांडभृतवोहित्थश क्टोष्ट्रमण्डलिका संभृतसम्भारोपि प्राहृषिसप्तरात्रावच्छिन्नमुशलप्रमाण जलधारावर्षनिरुद्धसकलप्राणिगणसञ्चारमनोरथायांमहान दीजलपूरानीत काष्ठानिजिष्टक्षुरुपभोग धर्म्मावसरे निष्टत्तापराशेष शुभपरिणाम: केवलमर्थोपार्ज्जन प्रवृत्तइत्युक्तंच उक्कणइक्ख यादूनिहण दूरन्तिं णसुअतिदियाविवससंकोलिंपइट्टइज्ज सयंयंलंछियपडिलंछियंकुणइभुंजसुनतावरिकोजोमेउ नवियअज्जमज्जीहं नवियवसीहामिघरेकावव्व मिणंवङ्क अज्जंपुनरपि लोभिनो: शुभव्यापारानाह आलुंपेआसमंताल्लुंपतीत्यालुंप: सहिलोभाभिभू तांत: करणोपगत कार्त्तव्याकर्त्तव्यविवेको अर्थलोभैकदत्तदृष्टि रैहिकामुष्मिक विपाककारिणीर्निर्लांछनगल कर्त्तनचौर्यादिका: क्रियाकरोत्यन्यच्च सहसात्कारेकरणंकारो असमीक्षितपूर्वापरदोष सहसाकरणंसहसाकार सविद्यतेयस्येत्यर्थं आदिभ्योऽच् अथवाकां दसत्वात्कर्त्तव्येंचयत: करोतीतिकार: तथाहिलोभतिमिराच्छादितदृष्टिरर्थैकमना:सकुं तवच्छरावातमनालोच्ये पिपिताभिलाषितया सन्धिच्छेदनादितो विनश्यति लोभाभिभूतो ह्यर्थैकदृष्टिस्तन्मनास्तदर्थोपायं क्तोर्थमेव पश्यतिनापायानाहच विणचिट्टचित्ते विविधमने कधानिविटंस्थितमवमाढ मर्थोपार्ज्जनोपाये मातापित्राद्यभिष्वंगेवाशब्दादिविषयोपभोगेवाचित्तमंत:करणंयस्य सतथापाठांतरंवा विणिविट्टचिट्टेत्ति विशेषेणनिविष्टा कायवाग्मनसी परस्पन्दालिकार्थोपार्ज्जनापायादौ चेष्टायस्यसनिविष्टचेष्टोवा किंभवतीत्याह

इत्यादि अत्रास्मिन्मातापित्रादो शब्दादिविषयसंयोगा विनिविष्टचित्त:सन् पृथिवीकायादिजंतूनां यच्छस्त्रमुपघातकारि तत्पुन:
पुन:प्रवर्त्तते एवंपौन:पुण्येनशस्त्रे प्रवृत्तोभवति यदिपृथिवीकायादिजंतूनामुपघातेवर्त्तते तथाहिंशसुहिंसायामित्यस्माच्छस्त्रत्वे हिं
स्यतइति करणेक्तान्विहितस्तच्च स्वकायादिभेदभिन्नमिति पाठान्तरंवा एत्थसत्ते पुणो पुणोअत्रमातापि त्वशब्दादिसंयोगो लोभार्थी
सन्सक्तो गृद्धोध्युपपन्न: पौन:पुण्येन विनिविटचेट आलुंपक: सहसाकार कालाकालसमुत्थायीवा भवतीत्येतच्च सांप्रतेक्षिणामपि
युज्जेत यद्यजरामरत्वं दीर्घायुष्कं वास्यात्तच्चोभयमपिनास्तीत्याह अप्पंचइत्यादि अल्पंस्तोकञ्च शब्दोऽधिकवचन: खलुरवधारणे
आयुरितिभवस्थितिहेतव: कर्म्मपुद्गलाइहेति संसारेमनुष्यभवेचै केषांकेषांचिदेव मानवानांमनुजानामिति पदार्थोवाक्यार्थस्त्विह
स्मिन्संसारे केषांचिन्मनुजानां क्षुल्लकभवोपलक्षितांत र्मुहूर्त्तमात्रमल्पं स्तोकमायुर्भवति चशब्दादुत्तरोत्तरसमयादि वृद्धापल्योपम
त्रयावसानेष्वायुषित खलुशब्दस्यावधारणार्थत्वात्संयम जीवितमल्पमेवेति तथाह्यन्तर्मुहूर्तादारभ्य देशोनपूर्वकोटिंयावत्संयमायुष्कं
तच्चाल्पमेवेति अथवात्रिपल्योपमस्थिति कमप्यायुरल्पमेव यतस्तदप्यन्तर्मुहूर्त्तमपहाय सर्वमपवर्त्तते उक्तञ्चअद्धा जोगुक्कोसेवंधित्ता
भोगभूमीएसुलहुं सव्वप्पजीवियंवज्जइत्तु उवट्टियादोण्हं अस्यायमर्थउत्कृष्टेयोगे बंधाध्यवसायस्थानेआयुषोयोबंधकालोद्धा उत्कृष्ट
एवतंबध्वाक्वभोगभूमिकेषु देवकुर्वादि जेषुतस्यक्षिप्रमेव सर्वाल्पमायुर्वर्ज्जयित्वा द्वयोस्तिर्यग्मनुष्ययोरपवर्त्तिकां प्रवर्त्तनंभवत्येतच्चाप
र्याप्तकांत र्मुहूर्त्तान्तर्द्रष्टव्यं ततऊर्द्धमनपवर्त्तनमेवेति सामान्येनवायु: सोपक्रमायुषां सोपक्रमंनिरुपक्रमं निरुपयदात्मसमानस्यायु
षस्त्रिभागत्रिभागेवा जघन्यतएकेन द्वाभ्यांचोत्कृष्टत: सप्तभिरष्टभिर्वा वर्षैरन्तर्मुहूर्त्तप्रमाणेन कालेनात्मप्रदेशरचना नाडिकांत
र्वर्त्तिन आयुष्ककर्म्मवर्गणापुद्गलान्प्रयत्नविशेषेण विधत्ते तदा निरुपक्रमायुर्भवतीत्यन्यदातु सोपक्रमायुष्क इत्युपक्रमश्चोपक्र्य क्रमणा
कारणैर्भवति तानिचामूनि दण्डकससत्यरज्जू अग्गीउदगपडणविसंवाला सीउण्हंअरइभयं खुहापिवासायवाहीया मुत्तपुरीसनि
रोहेजिण्णाजिण्णेय भोयणेबहुसोघंसण घोलणपीलणआउस्स उवक्कमाएतेउक्तञ्च स्वतोऽन्यातदूतस्ततोभिमुख धावमानापदामहोनि
पुणता तृणाक्षणमयी हयज्जीवते सुखेफलमेतिक्षुधा सरसमल्पमायोजितंकियच्चिरमचर्वितं दशनसंकटेस्थास्येतिउच्छ्वासावधय:प्राणा:
सचोच्छ्वास समीरण:स्खलनान्यत् क्षणमप्यायुरड्डुतं इत्यादियेपि दीर्घायुष्कस्थिति काउपक्रमणकारणाभावे आयुस्थितिमनुभवंति
तेपिमरणादप्यधिकां जराभिभूतविग्रहा जघन्यतरामवस्थामनुभवंतीति तद्यथेत्यादिनादर्शयति सोअपरिणाणेहिं इत्यादिततोसे
एगदामूढभावं जणयंतीतियावत् शृणोतिभाषा:परिणतान् पुद्गलानिति श्रोत्रंतच्चकदंबपुष्पाकारं द्रव्यतोभावतोभाषा द्रव्यग्रहणल
ब्ध्युपयोगस्वभावमिति तेनश्रोत्रेणपरि:समंताद्घटपट शब्दादिविषयाणि ज्ञानानिपरिज्ञानानितै: श्रोत्रपरिवर्जनैर्जरा प्रभावात्परिही
यमानै: सद्भिस्ततोसौप्राणी एकदाहृद्धावस्थायारोगोदयावसरेवा मूढभावंमूढतांकर्त्तव्याकर्त्तव्यज्ञतामिन्द्रियपाटवाभावादात्मनोज
नयतिहिताहितप्राप्तिपरिहार विवेकशून्यतमोपद्यतइत्यर्थ:जनयंतीतिविवेकवचनावसरेतिडातिडोभवंतीति बहुवचनमकारिअथवा
तानिवाश्रोत्रविज्ञानानिपरिहीयमाणान्यात्मन: सदसद्विवेकसर्वतलनामापादयंतीति श्रोतादिविज्ञानानांचतृतीयाप्रथमार्थैसुप्व्यत्य
येनद्रष्टव्ये तिएवंचक्षुरादिविज्ञानेष्वपियोज्जंअत्रचकरणत्वादिन्द्रियाणामेवंसर्वत्रद्रष्टव्यंश्रोत्रेणात्मनोनिचक्षुषात्मनोविज्ञानानीतिननु
चतान्येवदृष्टीगिकृतोनभवंतिउच्यन्ते अशश्रमेयंविज्ञातुंतद्विनाशेतदुपलब्धार्थस्मृत्यभावात्हश्यते चहपीकोपघातेपितदुपलब्धार्थस्मरणंत
द्यथाधवलगृहांतर्वर्त्तिपुरुषं पञ्चवातायनोपलब्धग्रर्थस्यतदन्यतरस्थगनेपितदुपपत्तिरितितयाह्यहमनेनश्रोत्रेणचक्षुषावामंदमर्थमुपालभे
नेनचस्फुटतरमिति स्पष्टैवकरणत्वात्गतिरक्षणांयद्येवमन्यान्यपि करणानिसंतितानिकिंनोपात्तानिकानिपुनस्तान्युच्यन्ते वाक्पाणि
पादपायूपस्थमनांसि वचनादानविहरणोत्सर्गानंदसंकल्पव्यापाराणि ततश्चैतेषामात्मोपकारकत्वेनकरणत्वादिन्द्रियत्वमित्येवं चैकादशे
न्द्रियसद्भावेसति पञ्चानामेवोपादानं किमर्थमित्याहोचार्योनैषदोषइहह्यात्मनोविज्ञानोत्पत्तौयतप्रकृष्टमुपकारकं तदेवकरणत्वमुच्यते
इन्द्रियमेतानितु वाक्पाण्यादीनि नैवात्मनोअनन्यसाधारणतया करणत्वेन व्याप्रियंते अथवाकाचनक्रियामुपादाय करणत्वमुच्यते

